<table>
<tr><th>छन्दसां वृत्तिनामानि ।</th><th>छन्दसां लक्षणानि ।</th><th>छन्दसामुदाहरणानि ।</th></tr>
<tr><td>मञ्जरी<br>पञ्चमे नवमे च यतिः ।</td><td>सजसा यलौ गिति शरग्रहैर्मञ्जरी<br>||ऽ,|ऽ|,||ऽ,|ऽऽ,|,ऽ</td><td></td></tr>
<tr><td>कुमारी<br>अष्टमे नवमे च यतिः ।</td><td>नजभजगैर्गुरुश्च वसुषट् कुमारी<br>|||,|ऽ|,ऽ||,|ऽ|,ऽ,ऽ</td><td></td></tr>
<tr><td>सुकेसरम्</td><td>नरनरैर्लगौ च रचितं सुकेसरम्<br>|||,ऽ|ऽ,|||,ऽ|ऽ,|,ऽ</td><td></td></tr>
<tr><td>चन्द्रौरसः</td><td>म्भौ न्यौ लगौ चेदिह भवति च चन्द्रौरसः<br>ऽऽऽ,ऽ||,|||,|ऽऽ,|,ऽ</td><td></td></tr>
<tr><td>चक्रपदम्</td><td>चक्रपदमिह भननगलगुरुभिः<br>ऽ||,|||,|||,|||,|,ऽ</td><td></td></tr>
<tr><td>वासन्ती</td><td>वासन्तीयं स्यादिह खलु मतौ न्यौ गौ चेत्<br>ऽऽऽ,ऽऽ|,|||,|ऽऽ,ऽ,ऽ</td><td></td></tr>
<tr><td>पञ्चदशाक्षरा वृत्तिः । अतिशक्वरी ।</td><td></td><td></td></tr>
<tr><td>शशिकला</td><td>गुरुनिधनमनुलघुरिह शशिकला<br>||||||||||||||,ऽ</td><td>मलयजतिलकसमुदितशशिकला<br>व्रजयुवतिललितदलिकगगनगता ।<br>सरसिजनयनहृदयसलिलनिधिं<br>व्यतनुत विततरभसपरितरलम् ॥</td></tr>
<tr><td>स्रक्<br>अस्याः षड्भिर्नवभिश्च यतिः ।</td><td>स्रगियमपि च रमणव रचितयतिः<br>||||||,|||,|||||,ऽ</td><td>अयि सहचरि ! रुचिरतरगुणमयी<br>स्रगिमधसितरनपगतपरिमला ।<br>मगिव निवस विलसदनुपमरसा<br>सुमुखि ! मुदितदनुजदलनहृदये ॥</td></tr>
<tr><td>मणिगुणनिकरः<br>अष्टभिः सप्तभिश्च यतिः ।</td><td>वसुमुनियतिरिति मणिगुणनिकरः<br>|||||||,|,||||||,ऽ</td><td>नरकरिपुरवतु निखिलसुरगति-<br>रमितमहिमभरसहजनियमतिः ।<br>अनवधिमणिगुणनिकरपरिचितः<br>सरिदधिपतिरिव धृततनुविभवः ॥</td></tr>
<tr><td>मालिनी<br>अष्टभिः सप्तभिश्च यतिः ।</td><td>ननमयययुतेयं मालिनी भोगिलोकैः<br>|||,|||,ऽऽऽ,|ऽऽ,|ऽऽ</td><td>मृगमदकृतचर्चा पीतकौषेयवासा<br>रुचिरशिखिशिखण्डाबद्धधम्मिल्लपाशा ।<br>अनृजुनिहितमंशे वंशमुत्क्वाणयन्ती<br>धृतमधुरिपुलीला मालिनी पातु राधा ॥</td></tr>
<tr><td>लीलाखेलः</td><td>एकन्यूनौ विद्युन्मालापादौ चेल्लीलाखेलः<br>ऽऽऽ,ऽऽऽ,ऽ,ऽ,ऽऽऽ,ऽऽऽ,ऽ</td><td>पायाद्वो गोविन्दः कालिन्दीकूले गोपीचक्रे<br>रासोल्लासक्रीडद्गोपीभिः सार्द्धं लीलाखेलः ।<br>मन्दाक्रान्तासीरोपान्ते स्वैरक्रीडाभिर्लीलो<br>यद्वद्वाणामीशः स्वर्वेश्याभिः खेलन्तीभिः ॥</td></tr>
<tr><td>विपिनतिलकम्</td><td>विपिनतिलकं नसनरेफयुग्मैर्भवेत्<br>|||,||ऽ,|||,ऽ|ऽ,ऽ|ऽ</td><td>विपिनतिलकं विकसितं वसन्तागमे<br>मधुव्रतमदैर्मधुकरै रणद्भिर्वृतम् ।<br>मलयमरुता रचितलास्यमालोकयन्<br>व्रजयुवतिभिर्विहरति स्म मुग्धो हरिः ॥</td></tr>
<tr><td>तूणकम्</td><td>तूणकं समानिकापदद्वयं विनान्तिमम्<br>ऽ,|,ऽ|ऽ,|ऽ|,ऽ,|,ऽ|ऽ,|ऽ</td><td>सा सुवर्णकेतकं विकाशि भृङ्गपूरितं<br>पञ्चबाणबाणजालपूर्णहेमतूणकम् ।<br>राधिका वितर्क्य माधवाद्य मासि माधवे<br>मोहमेति निर्भरं त्वया विना कलानिधे ! ॥</td></tr>
<tr><td>चन्द्रलेखा<br>सप्तमे अष्टमे च यतिः ।</td><td>म्नौ मो यौ चेद्भवेतां सप्ताष्टकैश्चन्द्रलेखा<br>ऽऽऽ,ऽ|ऽ,ऽऽऽ,|ऽऽ |ऽऽ,</td><td>विच्छिन्दे ते मुरारे ! पाण्डुप्रकाशच्छलाङ्गी<br>श्यामच्छायं दुकूलं न भ्राजति बिभ्रती सा ।<br>राधाम्भोदस्य गर्भे लीना यथा चन्द्रलेखा<br>किन्त्वाप्ता त्वां स्मरन्ती धत्ते ध्रुवं जीवयोगम् ॥</td></tr>
<tr><td>चित्रा</td><td>चित्रा नामच्छन्दश्चित्रं चेत् त्रयो मा यकारौ<br>ऽऽऽ,ऽऽऽ,ऽऽऽ,|ऽऽ,|ऽऽ</td><td>गोपाली लीलालोला यदनु कलिन्दात्मजायां<br>खेलन्मुक्ताहारा वन्यस्रक्सन्नद्धचिह्ना ।<br>कंसारातेर्मूर्तिश्चित्रा हृदि क्रीडतीयं<br>कोऽन्यः स्वर्गो मोक्षो वाञ्छाश्रयति तत्र जाने ॥</td></tr>
</table>

| छन्दसां वृत्तिनामानि। | छन्दसां लक्षणानि। | छन्दसामुदाहरणानि। |
| --- | --- | --- |
| प्रभद्रकम् | भवति नजौ भजौ रसहितौ प्रभद्रकम्<br>111,121 211,121,212 | |
| एला<br>पञ्चभिर्दशभिश्च यतिः। | सजना नयौ शरदशयतिरियमेला<br>112,121,111,111,122 | |
| कामक्रीडा | माः पञ्च स्युर्यस्यां सा कामक्रीडासंज्ञा ज्ञेया<br>222,222,222,222,222 | |
| सुकेलकम् | नजभजरैर्विराजितमिदं सुकेलकम्<br>111, 121,211,121,212 | |
| चन्द्रकान्ता<br>सप्तभिरष्टाभिश्च यतिः। | चन्द्रकान्ताभिधा रौ मसौ यो विरमः स्वराष्टौ<br>212,212,222,112,122 | |
| उपमालिनी<br>अष्टाभिः सप्तभिश्च यतिः। | ननतभरकृताष्टस्वरैरुपमालिनी<br>111,111,221,211,212 | |
| ऋषभः | ऋषभाख्यमेतदुदितं सजसा सयौ चेत्<br>112,121 112,112,122 | |
| मानसहंसः | कथयन्ति मानसहंसनाम सजौ जभराः<br>112,121,121 211,212 | |
| नलिनी | सगणैः शिववक्त्रमितैर्गदिता नलिनी<br>112,112,112,112,112, | |
| निशिपालकम् | शंस निशिपालकमिदं भजसनाश्च रः<br>211,121,112,111,212 | |
| षोडशाक्षरा वृत्तिः। अष्टिः। | | |
| चित्रम् | चित्रसंज्ञमीरितं समानिका पदद्वयम्<br>2,1,212,121,2,1,212,121 | विद्रुमारुणाधरोष्ठशोभिवेणुवाद्यहृष्ट-<br>वल्लवीजनाङ्गसङ्गजातमुग्धकण्टकाङ्ग !।<br>त्वां सदैव वासुदेव ! पुण्यलभ्यपादसेव !<br>वन्यपुष्पचित्रकेश ! संस्मरामि गोपवेश ! ॥ |
| ऋषभगजविलसितम्<br>गजतुरगविलसितमिति शम्भौ।<br>सप्तभिर्नवभिश्च यतिः। | भत्रिनगैः स्वराङ्कऋषभगजविलसितम्<br>211,212,111,111,111,2 | यो हरिरुच्चखान खरतरनखरशरै-<br>र्दुर्जयदैत्यसिंहसुविकटहृदयतटम्।<br>किञ्च चित्रमेष यदखिलमपहृतवान्<br>कंसनिदेशदृप्यदृषभगजविलसितम् ॥ |
| चकिता<br>अस्या अष्टमे यतिः। | भात् समतनगैरष्टच्छेदे स्यादिह चकिता<br>211,112,222,221,111,2 | दुर्जयदनुजश्रेणीदृक्शिष्टाशनचकिता<br>यद्भुजपरिघत्राता याता साध्वसविगमम्।<br>दीव्यति दिवि यन्माला स्वेच्छं नन्दनविपिने<br>गच्छत शरणं कृष्णं तं भीता भवरिपुतः॥ |
| पञ्चचामरम् | प्रमाणिका पदद्वयं वदन्ति पञ्चचामरम्<br>121,212,1,2,121,212,1,2 | सुरद्रुमूलमण्डपे विचित्ररत्ननिर्म्मिते<br>लसद्वितानभूषिते सलीलविभ्रमालसम्।<br>सुराङ्गनाभवल्लवीकरप्रपञ्चचामर-<br>स्फुरत्समीरवीजितं सदाच्युतं भजामि तम्॥ |
| मदनललिता<br>चतुर्थे षष्ठे च यतिः। | म्भौ नो म्नौ गो मदनललिता वेदैः षड्भिः<br>222,211,111,222,111,2 | विभ्रष्टस्रग्गलितचिकुरा धौताधरपुटा<br>ग्लायत्पत्रावलिकुचतटोच्छ्वासोर्म्मितरला।<br>राधात्यर्थं मदनललितान्दोलालसवपुः<br>कंसारातेरतिरसमहो चक्रेऽतिचटुलम्॥ |
| वाणिनी | नजभजरैर्यदा भवति वाणिनी गयुक्तैः<br>111,121,211,121,212,2 | स्फुरतु ममाननेऽद्य ननु वाणि ! नीतिरम्यं<br>तव चरणप्रसादपरिपाकतः कवित्वम्।<br>भवजलराशिपारकरणक्षमं मुकुन्दं<br>सततमहं स्तवैः स्वरचितैः स्तवानि नित्यम्॥ |
| प्रवरललितम् | यमौ नः सौ गश्च प्रवरललितं नाम वृत्तम्<br>122,222,111,112,212,2 | भुजोत्क्षेपः शून्ये चलवलयझङ्कारयुक्तो<br>मुधा पादन्यासः प्रकटिततुलाकोटिनादः।<br>स्मितं वक्त्रेऽकस्माद्दृशि पटुकटाक्षोर्म्मिलीला<br>हरौ जीयादीदृक् प्रवरललितं वल्लवीनाम्॥ |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
|---|---|---|
| अचलधृतिः | द्विगुणितवसुलघुभिरचलधृतिरिह<br>।।।।।।।।,।।।।।।।। | तरणिदुहितृतटरुचिरतरवसति-<br>रमरमुनिसुखजनविहितधृतिरिह ।<br>मधुरिपुरभिनवजलधररुचिरतनु-<br>रचलधृतिरुदयति सुकृतिहृदि खलु ॥ |
| गरुडरुतम् | गरुडरुतं नजौ भजतगा यदा स्युस्तदा<br>।।।,।ऽ।,ऽ।।,।ऽ।,ऽऽ।,ऽ | अमरमयूरमानसमुदे पयोदध्वनि-<br>र्गरुडरुतं सुरारिभुजगेन्द्रसन्त्रासने ।<br>धरणिभरावतारविधिडिण्डिमाडम्बरः<br>स जयति कंसरङ्गभुवि सिंहनादो हरेः ॥ |
| धीरललिता | संकथिता भरौ नरनगाश्च धीरललिता<br>ऽ।।,ऽ।ऽ,।।।,ऽ।ऽ,।।।,ऽ | |
| अश्वगतिः | पञ्चभकारयुताऽश्वगतिर्यदि चान्त्यगुरुः<br>ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ | |
| मणिकल्पलता | नजरभभैन गेन च स्यान्मणिकल्पलता<br>।।। ।ऽ।,ऽ।ऽ,ऽ।।,ऽ।।,ऽ | |
| रूपम् | यस्मिन् सर्वे गा राजन्ते अष्टाद्यं तद्रूपं नाम<br>ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ,ऽ | |
| वरयुवतिः | भो रयना नगौ च यस्यां वरयुवतिरियम्<br>ऽ।।,ऽ।ऽ ।ऽऽ ।।।,।।।,ऽ | |
| सप्तदशाक्षरा वृत्तिः । अत्यष्टिः । | | |
| शिखरिणी<br>षष्ठे एकादशे च यतिः । | रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी<br>।ऽऽ,ऽऽऽ,।।।,।।ऽ,ऽ।।,।,ऽ | करादस्य भ्रष्टं ननु शिखरिणो दृश्यति शिशो-<br>र्विलीनाः स्युः सत्यं नियतमवधेयं तदखिलैः ।<br>इति व्यस्तोपानुचितनिभृतालापजनितं<br>स्मितं बिभ्रद्देवो जगदवतु गोवर्द्धनधरः ॥ |
| पृथ्वी<br>अष्टमे नवमे च यतिः । | जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः<br>।ऽ।,।।ऽ ।ऽ।,।।ऽ,।ऽऽ,।,ऽ | दरन्मदगुणेश्वरप्रकरदुःस्थपृथ्वीभरं<br>जहार निजलीलया यदकुलेऽवतीर्यात्र यः ।<br>स एष जगतीगतिर्दुरितभारमस्मादृशां<br>हरिष्यति हरिः स्मृतिमागमनादभिष्टोषितः ॥ |
| वंशपत्रपतितम्<br>वंशदलमिति शम्भौ वंशपत्रपतिता इति केचित् । अस्य दशमे सप्तमे च यतिः । | दिङ्मुनि वंशपत्रपतितं भरनभनलगैः<br>ऽ।।,ऽ।ऽ,।।।,ऽ।।,।।।,।,ऽ | ननुनवंशपत्रपतितं रजनिजलकणं<br>पश्य मुकुन्द । मौक्तिकमिवोत्तमसरकतगम् ।<br>एष च तं चकोरनिकरः प्रपिबति मुदितो<br>वाञ्छमवेत्य चन्द्रकिरणोऽमृतकणमिव ॥ |
| मन्दाक्रान्ता<br>अस्याश्चतुर्थे षष्ठे सप्तमे च यतिः । इयं दौत्यवर्णनोपयोगिनी प्रशस्ता । | मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्<br>ऽऽऽ,ऽ।।,।।।,ऽऽ।,ऽऽ।,ऽ,ऽ | प्रेमालापैः प्रियवितरणैः प्रीणितालिङ्गनाद्यै-<br>र्मन्दाक्रान्ता तदनु नियतं वश्यतामेति बाला ।<br>एवं शिक्षावचनसुधया राधिकायाः सखीनां<br>प्रीतः पायात् स्मितसुवदनो देवकीनन्दनो नः ॥ |
| हरिणी<br>षष्ठे चतुर्थे सप्तमे च यतिः । | नसमरसला गः षड्वेदैर्हयैर्हरिणी मता<br>।।।,।।ऽ,ऽऽऽ,ऽ।ऽ,।।ऽ,।,ऽ | व्यधित स विधिर्नेत्रं नीत्वा ध्रुवं हरिणीगणाद्-<br>व्रजमृगदृशां सन्दोहस्योल्लसन्नयनश्रियम् ।<br>यदयमनिशं दूर्वाश्यामे मुरारिकलेवरे<br>व्यकिरदधिकं वक्राकाङ्क्षि विलोलविलोचनम् ॥ |
| नर्द्दटकम् | यदि भवतो नजौ भजजला गुरु नर्द्दटकम्<br>।।।,।ऽ।,ऽ।।,।ऽ।,।ऽ।,।,ऽ | व्रजवनिता वसन्तलतिका विलसन्मधुपं<br>मधुमथनं प्रमत्तजनताक्रमकल्पतरुम् ।<br>विभुमभिनौति कोऽपि सुकृती मुदितेन हृदा<br>रुचिरपदावलीवलितनर्द्दटकेन कविः ॥ |
| कोकिलकम्<br>अस्य सप्तमे षष्ठे चतुर्थे च यतिः । | हयऋतुसागरैर्यतियुतं यदि कोकिलकम्<br>।।।,।ऽ।,ऽ।।,।ऽ।,।ऽ।,।,ऽ | लसदरुणेक्षणं मधुरभाषणमोदकरं<br>मधुसमयागमे सरसकेलिभिरुल्लसितम् ।<br>अलिललितद्युतिं रविसुतावनकोकिलकं<br>ननु कलयामि तं सखि ! सदा हृदि नन्दसुतम् ॥ |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
|---|---|---|
| हारिणी<br>अस्याश्चतुर्थे षष्ठे सप्तमे च यतिः । | वेदर्त्वश्वैर्मभनमयला गश्चेत्तदा हारिणी<br>ऽऽऽ,ऽ।।,।।।,ऽऽऽ,।ऽऽ,।,ऽ | यस्या नित्ये श्रुतिकुवलये श्रीशालिनी लोचने<br>रागः स्वीयोऽधरकिसलये लाक्षारसारञ्जनम् ।<br>गौरी कान्तिः प्रकृतिरुचिरा रम्याङ्गरागच्छटा<br>सा कंसारेर्ननु न कथं राधा मनोहारिणी ॥ |
| भाराक्रान्ता<br>चतुर्थे षष्ठे सप्तमे च यतिः । | भाराक्रान्ता मभनरसला गुरुः श्रुतिषड्हयैः<br>ऽऽऽ,ऽ।।,।।।,ऽ।ऽ,।।ऽ,।,ऽ | भाराक्रान्ता मम तनुरियं गिरीन्द्रविधारणात्<br>कम्पं धत्ते श्रमजलकणां तया परिमुञ्चति ।<br>इत्याचक्षन् जयति जलदस्वनाकुलवल्लवी-<br>संश्लेषोत्थं स्मरविलसितं विलोक्य गुरुं हरिः ॥ |
| हरिः | रसयुगहययुङ् नौ म्रौ सो लगौ हि यदा हरिः<br>।।।,।।।,ऽऽऽ,ऽ।ऽ,।।ऽ,।,ऽ | |
| कान्ता | भवेत् कान्ता युगरसहयैर्यभौ नरसा लगौ<br>।ऽऽ,ऽ।। ।।।,ऽ।ऽ ।।ऽ,।,ऽ | |
| चित्रलेखा<br>दशमे सप्तमे च यतिः । | समजा भजगा ग दिक्स्वरैर्भवति चित्रलेखा<br>।।ऽ,।।ऽ,।ऽ।,ऽ।।,।ऽ।,ऽ,ऽ | |
| अतिशायिनी | सभजैरतिशायिनी मता भजपरैर्गुरुभ्याम्<br>।।ऽ,।।ऽ,।ऽ।,ऽ।।,।ऽ।,ऽ,ऽ | |
| पञ्चचामरम् | अवेहि पञ्चचामरं जरौ जरौ जगौ लघुश्च<br>।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ,। | |
| अष्टादशाक्षरा वृत्तिः । धृतिः । | | |
| कुसुमितलतावेल्लिता<br>पञ्चमे षष्ठे सप्तमे च यतिः । | स्याद्भूतर्त्वश्वैः कुसुमितलतावेल्लिता म्तौ नयौ यौ<br>ऽऽऽ,ऽऽ।,।।।,।ऽऽ,।ऽऽ,।ऽऽ | क्रीडत्कालिन्दीललितलहरीवारिभिर्दाक्षिणात्यै-<br>र्वातैः खेलद्भिः कुसुमितलता वेल्लिता मन्दमन्दम् ।<br>भृङ्गालीगीतैः किसलयकरोल्लासितोल्लास्यलक्ष्मीं<br>तन्वाना चेतो रभसतरलं चक्रपाणेश्चकार ॥ |
| नन्दनम्<br>एकादशे सप्तमे च यतिः । इदमेव वेदरेफैश्छिन्ना महामालिका नाराधिकदशभिस्तारका दशवसुभिर्लसा इति क्वापि । | नजभजरैस्तु रेफसहितैः शिवैर्हयैर्नन्दनम्<br>।।।,।ऽ।,ऽ।।,।ऽ।,ऽ।ऽ,ऽ।ऽ | तरणिसुतातरङ्गपवनैः सलीलमान्दोलितं<br>मधुरिपुपादपङ्कजरजःसुपूतपृथ्वीतलम् ।<br>मुरहरचित्रचेष्टितकलाकलापसंस्मारकं<br>क्षितितलनन्दनं व्रज सखे ! सुखाय वृन्दावनम् ॥ |
| नाराचम् | इह ननरचतुष्कसृष्टन्तु नाराचमाचक्षते<br>।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | दिनकरतनयातटीकानने चारुसञ्चारिणी<br>श्रवणनिकटकृष्टमेणीदृशा कृष्ण ! राधा त्वयि ।<br>ननु विकिरति नेत्रनाराचमेषातिदुर्च्छेदनं<br>तदिह मदनविभ्रमोद्भ्रान्तचित्तावधत्स्व द्रुतम् ॥ |
| चित्रलेखा<br>चन्द्रलेखा इति क्वचित् । | मन्दाक्रान्ता नपरलघुयुता कीर्तिता चित्रलेखा<br>ऽऽऽ,ऽ।।,।।।,।,ऽऽ।,ऽऽ।,ऽ,ऽ | शङ्केऽमुष्मिन् जगति मृगदृशां साररूपं यदासी-<br>दाकृष्येदं व्रजयुवतिसभा वेधसा सा व्यधायि ।<br>नैतादृक् चेत् कथमुदधिसुतामन्तरेणाच्युतस्य<br>प्रीतं तस्यां नयनयुगमभूच्चित्रलेखाङ्गनायाम् ॥ |
| शार्दूलललितम्<br>द्वादशे चरणान्ते च यतिः । | मः सो जः सतसा दिनेशऋतुभिः शार्दूलललितम्<br>ऽऽऽ,।।ऽ,।ऽ।,।।ऽ,ऽऽ।,।।ऽ | ज्ञात्वा कंसन्दगे पराक्रमविधिं शार्दूलललितं<br>यश्चक्रे क्षितिभारकारिषु सुरारातिष्वतिदरम् ।<br>सन्तोषं परमन्तु देवनिवहे त्रैलोक्यशरणं<br>श्रेयो वः स तनोत्वपारमहिमा लक्ष्मीप्रियतमः ॥ |
| हरिणप्लुतम्<br>हरिणप्लुतेति क्वापि । | मात् सो जौ भरसंयुतौ करिवाणखैर्हरिणप्लुतम्<br>ऽऽऽ,।।ऽ,।ऽ।,।ऽ।,ऽ।।,ऽ।ऽ | |
| अश्वगतिः | पञ्चभकारयुताश्वगतिर्यदि चान्त्यसरचिता<br>ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ।।,।।ऽ | |
| सुधा | सुधा तर्कैस्तर्कैर्भवति ऋतुभिर्यो मो नसतसाः<br>।ऽऽ,ऽऽऽ,।।।,।।ऽ,ऽऽ।,।।ऽ | |
| चित्रलेखा | वर्णाश्वैर्मभनततमकैः कीर्तिता चित्रलेखेयम्<br>ऽऽऽ,।।।,।।।,ऽऽ।,ऽऽ।,ऽऽऽ, | |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|
| भ्रमरपदकम् | भाद्रनना नगौ भ्रमरपदकमिदमभिहितम्<br>२।।,२।२,।।।,।।।,।।।,।।२ | |
| शार्दूलम् | शार्दूलं वद मासषट्कयति मः सो जसौ रो भवेत्<br>२२२,।।२,।२।,।।२,२।२,२२२ | |
| केसरम् | अर्णवाश्वैर्मभनयरयुगैर्वृत्तं मतं केसरम्<br>२२२,२।।,।।।,।२२,२।२,२।२ | |
| चलम् | म्भौ न्जौ भ्रौ चेच्चलमिदमुदितं युगैर्मुनिभिः स्वरैः<br>२२२,२।।,।।।,।२।,२।।,२।२ | |
| लालसा | सैका वसुविरतिस्तनौ रैश्चतुर्भिर्युता लालसा<br>२२।,।।।,२।२,२।२,२।२,२।२ | |
| लता | भवति नयुगलं रभौ रौ दशभिर्गजैश्चेल्लता<br>।।।,।।।,२।२,२।।,२।२,२।२ | |
| सिंहविस्फूर्जितम् | तत्त्वलक्ष्वैर्मौ भ्मौ विरतिश्चेत् सिंहविस्फूर्जितं यौ<br>२२२,२२२,२।।,२२२,।२२,।२२ | |
| हरनर्तनम्<br>विबुधप्रिया इति च कुत्रापि । | रसौ जजौ भरसंयुतौ करिवाणखैर्हरनर्तनम्<br>२।२,।।२,।२।,।२।,२।।,२।२ | |
| क्रीड़चक्रम् | इदं क्रीड़चक्रं सदीर्घं समस्तैर्यकारैः समेतम्<br>।२२,।२२,।२२,।२२,।२२,।२२, | |
| चीरकम् | चीरकमुदितं भसनजनैरिह रगणोऽन्ततः<br>२।।,।।२,।।।,।२।,।।।,२।२ | |
| ऊनविंशत्यक्षरा वृत्तिः । अतिधृतिः । | | |
| मेघविस्फूर्जिता<br>षष्ठे षष्ठे सप्तमे च यतिः । | रसर्त्वश्वैर्य्मौ न्सौ ररगुरुयुतौ मेघविस्फूर्जिता स्यात् ।<br>।२२,२२२,।।।,।।२,२।२,२।२,२ | कदम्बामोदाढ्या विपिनपवनाः केकिनः कान्तकेका विनिद्राः कन्दल्यो दिशि दिशि मुदा दर्दुरा दृप्तनादाः । निशा नृत्यद्विद्युद्विलसितलसन्मेघविस्फूर्जिता चेत् प्रियः स्वाधीनोऽसौ दनुजदलनो राज्यमस्मात् किमन्यत् ॥ |
| छाया<br>षष्ठे द्वादशे अन्ते च यतिः । | भवेत् सैवच्छाया तयुगगयुता स्यात् द्वादशान्ते यदा<br>।२२,२२२,।।।,।।२,२२।,२२।,२ | अभीष्टं जुष्टो यो वितरति लसद्दोश्चारुशाखो नखोज्ज्वलः स्फुरन्नानारत्नस्तबकिततनुश्चित्रांशुकालम्बितः । न यस्याङ्घ्रिच्छायामुपगतवतां संसारघोरातप-स्तनोति प्रोत्तापं स जगदवतात् कंसारिकल्पद्रुमः ॥ |
| शार्दूलविक्रीड़ितम्<br>द्वादशे ऊनविंशतौ च यतिः । | सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीड़ितम्<br>२२२,।।२,।२।,।।२,२२।,२२।,२ | गोविन्दं प्रणमोत्तमाङ्ग । रसने । त्वं घोषयाहर्निशं पाणी । पूजयतं मनः । स्मर पदे । तस्यालयं गच्छतम् । एवञ्चेत् कुरुताखिलं मम हितं शीर्षादयस्तद् ध्रुवं न प्रेक्षे भवतां भवे भयमहाशार्दूलविक्रीड़ितम् ॥ |
| सुरसा<br>सप्तमे चतुर्दशे अन्ते च यतिः । | म्रौ भ्नौ यो नो गुरुश्चेत् स्वरमुनिकरणैरत्र सुरसाम्<br>२२२,२।२,२।।,।।।,।२२,।।।,२ | कामक्रीड़ासतृष्णो मधुसमयसमारम्भरभसात् कालिन्दीकूलकुञ्जे विहरणकुतुकाकृष्टहृदयः । गोविन्दो बल्लवीनामधररससुधां प्राप्य सुरसां प्राज्ञः पीयूषपानप्रभवजनसुखं व्यस्मरदसौ ॥ |
| फुल्लदाम<br>पञ्चमे द्वादशे अन्ते च यतिः ।<br>पुष्पदाम इति केचित् । | मो गौ नौ तौ गौ स्वरहयतुरगैः फुल्लदाम प्रसिद्धम्<br>२२२,२,२,।।।,।।।,२२।,२२।,२,२ | ग्रीष्मे कान्तां प्रकटितकदनं व्यक्तमालोक्य कंसं कृष्णस्तामभिक्लिदितवसतिभिर्योमसंस्पर्शविसृष्टम् । मृगनाभोदैन स्वागितदशदिगाभोगमाकृष्टभृङ्गं मौलौ दैत्यारेर्व्यधितदनुपमं स्वकरो फुल्लदाम ॥ |
| पञ्चचामरः | नयुगलगलघू रजौ रलगा यदा स पञ्चचामरः<br>।।।,।।।,२,।,२।२,।२।,२।२,।,२ | |
| बिम्बम् | वृत्तं बिम्बाख्यं शरमुनितुरगैर्मतौ नृसौ ततौ चेद्गुरुः<br>२२२,२२।,।।।,।।२,२२।,२२।,२ | |

[illegible]

छन्दः

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|
| मकरन्दिका | रसैः षड्भिर्लोकैर्यमनसजजा गुरुर्मकरन्दिका<br>।ऽऽ,ऽऽऽ,।।।,।।ऽ,।ऽ।,।ऽ।,ऽ | |
| मणिमञ्जरी | इनाश्वैः स्यात् यभनयजजगाः कीर्तिता मणि-<br>मञ्जरी<br>।ऽऽ,ऽ।।,।।। ।ऽऽ,।ऽ।,।ऽ।,ऽ | |
| समुद्रतता | गजाश्चितुरगैर्नसौ जसतभा गश्चेत् समुद्रतता<br>।ऽ।,।।ऽ,।ऽ।,।।ऽ,ऽऽ।,ऽ।।,ऽ | |
| विंशत्यक्षरा वृत्तिः । कृतिः । | | |
| सुवदना<br>सप्तमे चतुर्दशे विंशतौ च यतिः । | ज्ञेया सप्ताश्वषड्भिर्मरभनययुता भ्लौ गः सुवदना<br>ऽऽऽ,ऽ।ऽ,ऽ।।,।।।,।ऽऽ, ऽ।।,।,ऽ | प्रत्याहृत्येन्द्रियाणि स्वदितरविषयात्मासाग्रनयना<br>त्वां ध्यायन्ती निकुञ्जे परमतरुणं हर्षोत्थपुलका ।<br>आनन्दाश्रुप्लुताक्षी वसति सुवदना योगैकरसिका<br>कामार्त्तिं त्यक्तुकामा ननु नरकरिपो ! राधा मम सखी ॥ |
| गीतिका | सजजा भरौ सलगा यदा कथिता तदा खलु<br>गीतिका<br>।।ऽ,।ऽ।,।ऽ।,ऽ।।,ऽ।ऽ,।।ऽ,।,ऽ | करतालचञ्चलकङ्कणस्वनमिश्रणेन मनोरमा<br>रमणीयवेणुनिनादरङ्गिमसङ्गमेन सुखावहा ।<br>बहुलानुरागनिवाससम्भवा भवरागिणां<br>विदधौ हरिं खलु वल्लवीजनचारु चामरगीतिका ॥ |
| वृत्तम् | वृत्तमीदृशन्तु नामतो रजौ रजौ रजौ गुरुर्लघुश्च<br>ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ,। | चित्रवृत्तलीलया निसर्गरम्यदेहरूपविभ्रमेण<br>राजमानसद्वयोविलाससम्पदा कलाकुतूहलेन ।<br>यः समं व्रजाङ्गनाजनैः सुराङ्गनानिभैः सुखं समेत्य<br>विष्णुरुल्ललास चित्तपद्मकोषषट्पदः स मे सदास्तु ॥ |
| शोभा<br>षष्ठे त्रयोदशे अष्टौ च यतिः । | रसाश्वाश्वैः शोभा नयुगनजटरा मेघविस्फू-<br>र्जिता चेत्<br>।ऽऽ,ऽऽऽ,।।।,।।।,ऽ,ऽ।ऽ,ऽ।ऽ,ऽ | सर्पोयशोभीलत्सरसिजयुगला मध्यनम्रा फलाभ्यां<br>तयोरूर्ध्वं राजत्सरलकिसलयाश्लिष्टसुस्निग्धशाखा ।<br>लसन्मुक्तारक्तोत्पलकुवलयवच्चन्द्रबिम्बाञ्चिताग्रा<br>महाशोभा मौलौ मिलदलिपटलैः कृष्ण ! सा कापि वल्ली ॥ |
| सुवंशा | ख्याता पूर्वैः सुवंशा यदि मरभना तद्वयं गौ गुरुश्च<br>ऽऽऽ,ऽ।ऽ,ऽ।।,।।।,ऽऽ।,ऽऽ।,ऽ,ऽ | |
| मत्तेभविक्रीडितम्<br>त्रयोदशे यतिः । | सभरा नमौ यलगाश्च त्रयोदशयतिर्मत्तेभविक्री-<br>डितम्<br>।।ऽ,ऽ।।,ऽ।ऽ,।।।,ऽऽऽ,।ऽऽ,।,ऽ | |
| एकविंशत्यक्षरा वृत्तिः । प्रकृतिः । | | |
| स्रग्धरा<br>सप्तमे चतुर्दशे एकविंशतौ च यतिः । | म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा<br>कीर्तितेयम्<br>ऽऽऽ,ऽ।ऽ,ऽ।।,।।।,।ऽऽ,।ऽऽ,।ऽऽ | आक्रोशीन्दीवराभा कनककदलसत्पीतवासाः सुहासा<br>बर्हैश्चन्द्रकान्तैर्ललितचिकुरा चारुकर्णावतंसा ।<br>अंसन्यासक्तवंशध्वनिसुखितजगद्वल्लवीभिर्लसन्ती<br>मूर्तिर्गोपस्य विष्णोरवतु जगति वः स्रग्धरा हारिहारा ॥ |
| सरसी<br>सिद्धकमिति सलिलनिधिरिति च<br>क्वापि । | नजभजजा जरौ यदि तदा गदिता सरसी<br>कवीश्वरैः<br>।।।,।ऽ।,ऽ।।,।ऽ।,।ऽ।,।ऽ।,ऽ।ऽ | चिकुरकलापशैवलकृतप्रमदासु लसद्रसोर्मिषु<br>स्फुटवदनाम्बुजासु विलसद्भुजबालमृणालवल्लिषु ।<br>कुचयुगचक्रवाकमिथुनानुगता सुकलाकुतूहली<br>अरचयदच्युतो व्रजमृगीनयनासरसीषु विभ्रमम् ॥ |
| द्वाविंशत्यक्षरा वृत्तिः । आकृतिः । | | |
| हंसी<br>अष्टमे द्वाविंशतौ च यतिः । | मौ गौ नाश्चत्वारो गो गो वसुभुवनयतिरिति<br>भवति हंसी<br>ऽऽऽ,ऽऽऽ,ऽ,ऽ,।।।,।।।,।।।,।।।,ऽ,ऽ | सार्द्धं कान्तेनैकान्तेऽसौ विकचकमलमधुसुरभि पिबन्ती<br>कामक्रीडाकूतस्फीतप्रमदरसरभसमलघु रसन्ती ।<br>कालिन्दीये पद्मारण्ये पवनपतनपरितरलपरागे<br>कंसाराते ! पश्य स्वेच्छं सरभसगतिरिह विलसति हंसी ॥ |
| मदिरा | सप्तभकारयुतैकगुरुर्गदितेयमुदारतरा मदिरा<br>ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ | माधवमासि विकस्वरकेशरपुष्पलसन्मदिरामुदितै-<br>र्भृङ्गकुलैरुपगीतवने वनमालिनमालि ! कलानिलयम् ।<br>कुञ्जगृहोदरपल्लवकल्पिततल्पमनल्पमनोजरसं<br>त्वं भज माधविका मदुनर्तकमाशु नवातततोमगमा ॥ |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|
| भद्रकम् | भौ नरना रनावथ गुरुर्दिगर्कविरमं हि भद्रकमिदम्<br>ऽ॥,ऽ।ऽ,॥।,ऽ।ऽ,॥।,ऽ।ऽ,॥।,ऽ | |
| ललितम् | ललितं भुजगेन्द्रेण भाषितमेतच्चेत् मसरस-<br>जनगुभिः<br>ऽऽऽ,॥ऽ,ऽ।ऽ,॥ऽ,ऽऽ।,।ऽ।,॥।,ऽ | |
| महास्रग्धरा | सजसा नसौ ररौ गः फणिसुरगहयैः स्यान्महा<br>स्रग्धराख्या<br>॥ऽ,।ऽ।,ऽऽ।,॥।,॥ऽ,ऽ।ऽ,ऽ।ऽ,ऽ | |
| त्रयोविंशत्यक्षरा वृत्तिः । विकृतिः ।<br>अद्रितनया<br>अश्वललितमित्यन्यत्र । | नजभजभा जभौ लघुगुरू बुधैस्तु गदितेय-<br>मद्रितनया<br>॥।,।ऽ।,ऽ॥,।ऽ।,ऽ॥,।ऽ।,ऽ॥,।,ऽ | खरनरशौर्यपावकशिखापतङ्गनिभमग्नदेवगुणो<br>जलधिसुताविलासवसतिः सतां गतिरशेषमान्यमहिमा ।<br>भुवनहिताय नारचतुरश्चराचरधरोऽवतीर्ण इह हि<br>क्षितिवलयेऽस्ति कंसममनुजेति नमत्वाद्रितनया ॥ |
| मत्ताक्रीडम्<br>अष्टमे त्रयोदशे त्रयोविंशतौ च<br>यतिः । मत्ताक्रीडा इति क्वचित् ॥ | मत्ताक्रीडं वस्विष्वाशाय्यति मयुगनयुगमनुलघु-<br>गुरुभिः<br>ऽऽऽ,ऽऽऽ,ऽ,ऽ,॥॥॥॥॥॥,ऽ | मुग्धोन्मीलन्मत्ताक्रीडं मधुसमयसुलभमधुरमधुरसात्<br>गाने याने किञ्चित्सुस्पन्दत्पदमतनयनयुगलसरसिजम् ।<br>रासोल्लासक्रीडत्कान्तव्रजयुवतिवलयरचितभुजरसं<br>सान्द्रानन्दं वृन्दारण्ये स्मरत हरिमनघचरणपरिचयम् ॥ |
| सुन्दरिका | इह सुन्दरिका पिङ्गलमुनिनोक्ता सहयतो<br>भसतो जलभगाः<br>॥ऽ,॥ऽ,ऽ॥,॥ऽ,ऽऽ।,।ऽ।,।,ऽ॥,ऽ | |
| चतुर्विंशत्यक्षरा वृत्तिः । संस्कृतिः ।<br>तन्वी<br>पञ्चमे द्वादशे चतुर्विंशतौ च यतिः । | भूतमुनीनैर्यतिरिह भतना: सभौ भनयाश्च यदि<br>भवति तन्वी<br>ऽ॥,ऽऽ।,॥।,॥ऽ,ऽ॥,ऽ॥,॥।,।ऽऽ | माधव मुग्धैर्मधुकरविरुतैः कोकिलकूजितमलयसमीरैः<br>कम्प्रमुपैता मलयजसलिलैः प्लावनतोऽप्यधिगततनुदाहा ।<br>पद्मपलाशैर्विरचितशयना देहजसंज्वरभरपरिदूने<br>निःश्वसती सा मुहुरतिपरवं ध्यानलये तव निवसति तन्वी ॥ |
| किरीटम् | नाम किरीटमिदं भगणा यदि पिङ्गलनाग-<br>मुनीन्द्रमतं किल<br>ऽ॥,ऽ॥,ऽ॥,ऽ॥,ऽ॥,ऽ॥,ऽ॥,ऽ॥ | |
| दुर्मिलम् | सगणैरिह वृत्तवरं वसुभिः किल दुर्मिलमुक्तमिदं<br>कविभिः<br>॥ऽ,॥ऽ,॥ऽ,॥ऽ,॥ऽ,॥ऽ,॥ऽ,॥ऽ | |
| पञ्चविंशत्यक्षरा वृत्तिः । अतिकृतिः ।<br>क्रौञ्चपदा<br>पञ्चमे दशमे अष्टादशे पञ्च-<br>विंशतौ च यतिः । | क्रौञ्चपदा स्यात् भो मसभाश्चेदिषुशरवसुमुनि-<br>यति ननननगैः<br>ऽ॥,ऽऽऽ,॥ऽ,ऽ॥ ॥॥॥॥॥॥,ऽ | क्रौञ्चपदालीसिञ्जितनीरा मदकलखगकुलकलकलरुचिरा<br>फुल्लसरोजश्रीशविलासा मधुमुदितमधुपरवरभसकरी ।<br>कैतविलासप्रोज्ज्वलधामा ललितलहरिभरपुलकितसुतनुः<br>पश्य दरीमी कस्य न चेतो हरति सरलगतिरहिम-<br>किरणजा ॥ |
| षड्विंशत्यक्षरा वृत्तिः । उत्कृतिः ।<br>भुजङ्गविजृम्भितम्<br>अष्टमे ऊनविंशतौ षड्विंशतौ च<br>यतिः । | वस्वीशाश्वैश्छेदोपेतं ममतनननयुग रसलगै<br>भुजङ्गविजृम्भितम्<br>ऽऽऽ,ऽऽऽ,ऽऽ।,॥।,॥।,॥।,ऽ।ऽ,॥ऽ,।,ऽ | हेलोद्यच्चञ्चत्पादप्रकटविकटनटनभरोद्यतकरतालक-<br>च्छायोच्चैश्छायावद्भिः श्रुतिसरलगतिकिसलयसरञ्जित-<br>चारश्रुत् ।<br>अस्यन्नागस्त्रीभिर्भक्त्या मुकुलितकरकमलयुगं कृतस्तुति-<br>रच्युतः<br>पायाद्वोऽस्मत्कालिन्दीहृत्कृतनिजवसतिहृदङ्गभुजङ्ग-<br>विजृम्भितम् ॥ |
| अपवाहम् | मो नाः षट् सगाविति यदि नवरसरसस्वर-<br>यतियुतमपवाहाख्यम्<br>ऽऽऽ,॥।,॥।,॥।,॥।,॥।,॥।,॥ऽ,ऽ,ऽ | |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
|---|---|---|
| अथ दण्डकाः । सप्तविंशत्यक्षरा वृत्तिः । | | |
| चण्डवृष्टिप्रपातः | यदिह नयुगलं ततः सप्तरेफास्तदा चण्डवृष्टिप्रपातो भवेद्दण्डकः ।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ, | प्रलयघनघटामहारम्भमेघावलीचण्डवृष्टिप्रपाताकुलं गोकुलं सपदि समवलोक्य सव्येन हस्तेन गोवर्द्धनं नाम शैलं दधल्लीलया । कमलनयन ! रक्ष रक्षेति गर्व्वप्रसन्मुग्धगोपाङ्गनालिङ्गनानन्दितो गलदभिनवधातुधाराविचित्राङ्गरागो सुरारातिरस्तु प्रमोदाय वः ॥ |
| प्रचितकः | प्रचितकसमभिधो धीरधीभिः स्मृतो दण्डको नद्वयादुत्तरैः सप्तभिर्यैः ।।।,।।।,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ | मुरहर ! यदुकुलाम्भोधिचन्द्र ! प्रभो ! देवकीगर्भरत्न ! त्रिलोकैकनाथ ! प्रचितकपटसुरारिप्रणोद्दामदम्भावलस्तोमविद्रावणे केशरीन्द्र ! । चरणनखरसुधांशुच्छटोन्मेषनिःशेषितध्यायिचेतो निविष्टान्धकार । प्रणतजनपरितापोग्रदावानलोच्छेदमेघ ! प्रसीद प्रसीद प्रसीद ॥ |
| कुसुमस्तवकम् | सगणः सकलः खलु यत्र भवेत्तमिह प्रवदन्ति बुधाः कुसुमस्तवकम् ।।ऽ,।।ऽ,।।ऽ,।।ऽ,।।ऽ,।।ऽ,।।ऽ,।।ऽ,।।ऽ | विरराज यदीयकरः कनकद्युतिबन्धुरवामदृशः कुचकुड्मलगो भ्रमरप्रकरेण यथावृतमञ्जिरशोकलताविलसत्कुसुमस्तवकः ॥ स नवीनतमालदलप्रतिमच्छविविभ्रदतीवविलोचनहारिवपुश्चपलारुचिरांशुकवल्लिधरो हरिरस्तु मदीयहृदम्बुजमध्यगतः ॥ |
| मत्तमातङ्गलीलाकरः | यत्र रेफः परं स्वेच्छया गुम्फितः स स्मृतो दण्डको मत्तमातङ्गलीलाकरः ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | हेमगौरं वसानोऽंशुकं शक्रनीलासिते वर्ष्मणि स्पष्टदिव्यानुलेपाङ्कितो हारताराञ्शुवक्षोनभश्चित्रमालाञ्चितो भव्यभूषोज्ज्वलाङ्गः समं सीरिणा । अञ्जनाभास्वरेणेन्दुकुन्दाभ देहेन लीलापरिहासहासोर्म्मिकौतूहलैः कंसरङ्गाद्रिपः पातु वश्चक्रपाणिर्गतिक्रीडया मत्तमातङ्गलीलाकरः ॥ |
| अष्टाविंशत्यक्षरा वृत्तिः । अशोकपुष्पमञ्जरी | यत्र दृश्यते गुरोः परो लघुः क्रमात् स उच्यते बुधैरशोकपुष्पमञ्जरीति ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ। | मूर्द्धि चारुचम्पकस्रजा सलीलवेष्टनं लसन्नवङ्गचारुचन्द्रिका कचेषु कर्णयोरशोकपुष्पमञ्जरीवतंसको गलेच कान्तकेशरोपकल्पदाम । फुल्लनागकेशरादिपुष्परेणुरूषणं तनौ विचित्रमित्युपात्तवेश एष केशवः पुनातु वः सुपुष्पभूषितः स मूर्त्तिमानिवागतो मधुर्विहङ्गमञ्च ॥ |
| अनङ्गशेखरः | लघुर्गुरुर्निजेच्छया यदा निवेश्यते तदेष दण्डको भवत्यनङ्गशेखरः ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ।ऽ | उदेत्यसौ सुधाकरः पुरो विलोकयाद्य राधिके ! विजृम्भमाणगौरदीधिती रतिस्वहस्तनिर्म्मितः कलाकुतूहलेन चारुचम्पकैरनङ्गशेखरः किमु । इति प्रमोदकारिणीं प्रियाप्रमोदलक्षणां गिरं समुद्गिरन्मुरारिरद्भुतां प्रदोषकालसङ्गमोल्लसन्मना मनोजकेलिकौतुकी करोतु वः कृतार्थताम् ॥ |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणानि: । | छन्दसामुदाहरणानि । |
|---|---|---|
| त्रिंशदक्षरा वृत्तिः ।<br>अर्णः: | प्रतिचरणविवृद्धरेफाः स्युरर्णोऽर्णवव्यालजीमूत-<br>लीलाकरोद्दामशङ्खादयः<br>प्रतिचरणं चकारवृद्धिप्रपातस्य इत्यर्थः ।<br>111,111,212,212,212,212,212,212,212,212 | जय जय जगदीश विष्णो हरे राम दामोदर श्रीनिवासा-<br>च्युतानन्त नारायण<br>त्रिदशगणगुरो मुरारे मुकुन्दासुरारे हृषीकेश पीताम्बर<br>श्रीपते माधव ।<br>मकरगमन लक्ष्म वैकुण्ठ गोविन्द विश्वम्भरोपेन्द्र चक्रायुधा-<br>धोक्षज श्रीनिधे<br>बलिदमन नृसिंह शौरे । भवाम्भोधिघोरार्णसि त्वं निमज्जन्त-<br>मभ्युद्धरोपेन्द्र माम् ॥ |
| सिंहविक्रीडः | यकारैः कवीच्छानुरोधान्निबद्धैः प्रसिद्धो विशुद्धो-<br>ऽपरो दण्डकः सिंहविक्रीडनामा<br>122,122,122,122,122,122,122,122,122,122 | |
| त्रयस्त्रिंशदक्षरा वृत्तिः ।<br>अर्णवः | 111,111,212,212,212,212,212,212,212,212,212 | अर्णवादर्णवादीनामप्युदाहरणानि ज्ञेयानि ॥ |
| अशोकमञ्जरी | स्वेच्छया रजौ क्रमेण संनिवेशयत्युदारधीः कविः<br>स दण्डकः स्तुतो जयत्यशोकमञ्जरी<br>212,121,212,121,212,121,212,121,212,121,212 | |
| षट्त्रिंशदक्षरा वृत्तिः ।<br>व्यालः | 111,111,212,212,212,212,212,212,212,212,212,212 | |
| ऊनचत्वारिंशदक्षरा वृत्तिः ।<br>जीमूतः | 111,111,212,212,212,212,212,212,212,212,212,212,<br>212 | |
| द्वाचत्वारिंशदक्षरा वृत्तिः ।<br>लीलाकरः | 111,111,212,212,212,212,212,212,212,212,212,212,<br>212,212 | |
| पञ्चचत्वारिंशदक्षरा वृत्तिः ।<br>उद्दामः | 111,111,212,212,212,212,212,212,212,212,212,212,<br>212,212,212 | |
| सिंहविक्रान्तः | नयुगलगुरुयुगैवं यकाराः कवीच्छानुरोधा-<br>त्तदा यत्र बध्यन्त एषोऽपरो दण्डकः पण्डितै-<br>रीरितः सिंहविक्रान्तनामा<br>111,111,122,122,122,122,122,122,122,122,122,<br>122,122,122,122 | |
| अष्टचत्वारिंशदक्षरा वृत्तिः ।<br>शङ्खः<br>इत्यादयः । | 111,111,212,212,212,212,212,212,212,212,212,<br>212,212,212,212,212 | |
| इति समवृत्तानि समाप्तानि ॥*॥ | | |
| अथार्द्धसमवृत्तानि ।<br>उपचित्रम् ११ । ११ वृत्तिः । | विषमे यदि सौ सलगा दले भौ युजि भाद्-<br>गुरुकावुपचित्रम् ।<br>द्विरावृत्त्या श्लोकः पूरयितव्यः | |
| प्रथमपादे तृतीयपादे च | 112,112,112,1,2 | स्मरवेगवशात्तनुतां सुरं हेमनिभाङ्गकवर्णमलिनम् । |
| द्वितीयपादे चतुर्थपादे च | 211,211,211,2,2 | गगनस्थघनामिलितं यथा शारदनीरधरैरुपचित्रम् ॥ |
| वेगवती १० । ११ वृत्तिः । | विषमे प्रथमाक्षरहीनं दोधकमेव हि वेगवती<br>स्यात् | |
| प्रथमपादे तृतीयपादे च | 112,112,112,2 | स्मर वेगवती व्रजरामा केशववंशरवैरतिमुग्धा । |
| द्वितीयपादे चतुर्थपादे च | 211,211,211,2,2 | रभसान्न गुरून् गणयन्ती केलिनिकुञ्जगृहाय जगाम ॥ |

| छन्दसां वृत्तनामानि । | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|
| भद्रविराट् १०।११ वृत्तिः । | ओजे तपरौ जरौ गुरुश्चेत् म्सौ ज्गौ ग् भद्रविराड् भवेदनोजे | |
| प्रथमपादे तृतीयपादे च | ऽऽ।,।ऽ।,ऽ।ऽ,ऽ | |
| द्वितीयपादे चतुर्थपादे च | ऽऽऽ,।।ऽ,।ऽ।,ऽ,ऽ | |
| केतुमती १०।११ वृत्तिः । | असमे सजौ सगुरुयुक्तौ केतुमती समे भरनगाद् गः | |
| प्रथमपादे तृतीयपादे च | ।।ऽ,।ऽ।,।।ऽ,ऽ | |
| द्वितीयपादे चतुर्थपादे च | ऽ।।,ऽ।ऽ,।।।,ऽ ऽ | |
| विपरीतपूर्व्वा ११।११ वृत्तिः । | जतौ जगौ गो विषमे समे चेत् तौ ज्गौ ग एषा विपरीतपूर्व्वा | |
| प्रथमपादे तृतीयपादे च | ।ऽ।,ऽऽ।,।ऽ।,ऽ,ऽ | |
| द्वितीयपादे चतुर्थपादे च | ऽऽ।,ऽऽ।,।ऽ।,ऽ,ऽ | |
| आख्यानकी ११।१२ वृत्तिः । | आख्यानकी तौ जगुरू ग ओजे जतावनोजे जगुरू गुरुश्चेत् | |
| प्रथमपादे तृतीयपादे च | ऽऽ।,ऽऽ।,।ऽ।,ऽ,ऽ | |
| द्वितीयपादे चतुर्थपादे च | ।ऽ।,ऽऽ।,।ऽ।,ऽ,ऽ | |
| हरिणप्लुता ११।१२ वृत्तिः । | अयुजि प्रथमेन विवर्ज्जितं द्रुतविलम्बितकं हरिणप्लुता | |
| प्रथमपादे तृतीयपादे च | ।।,ऽ।।,ऽ।।,ऽ।ऽ | स्फुटफेनचया हरिणप्लुता बलिमनोज्ञतटा तरणेः सुता । |
| द्वितीयपादे चतुर्थपादे च | ।।।,ऽ।।,ऽ।।,ऽ।ऽ | कलहंसकुलारवशालिनी विहरतो हरति स्म हरेर्मनः ॥ |
| अपरवक्त्रम् ११।१२ वृत्तिः । | अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं नजौ जरौ | |
| प्रथमे तृतीये च पादे | ।।।,।।।,ऽ।ऽ,।,ऽ | स्फुटसुमधुरवेणुगीतिभिस्तमपरवक्त्रमवेत्य माधवम् । |
| द्वितीये चतुर्थे च पादे | ।।।,।ऽ।,।ऽ।,ऽ।ऽ | मृगयुवतिगणैः समं स्थिता व्रजवनिता धृतचित्तविभ्रमाः ॥ |
| द्रुतमध्या ११।१२ वृत्तिः । | भत्रयमोजगतं गुरुणौ चेद् युजि च नजौ ज्यजुतौ द्रुतमध्या | |
| प्रथमपादे तृतीयपादे च | ऽ।। ऽ।।,ऽ।।,ऽ,ऽ | |
| द्वितीयपादे चतुर्थपादे च | ।।।,।ऽ।,।ऽ।,।ऽऽ | |
| मालभारिणी ११।१२ वृत्तिः । | विषमे ससजा यदा गुरू चेत् सभरा येन तु मालभारिणीयम् | |
| प्रथमपादे तृतीयपादे च | ।।ऽ,।।ऽ,।ऽ।,ऽ,ऽ | |
| द्वितीयपादे चतुर्थपादे च | ।।ऽ,ऽ।।,ऽ।ऽ,।ऽऽ | |
| कौमुदी १२।१२ वृत्तिः । | अयुजि ननभभा समकेऽपि तु नयुगरयुगलं तदा कौमुदी | |
| प्रथमपादे तृतीयपादे च | ।।।,।।।,ऽ।।,ऽ।। | |
| द्वितीयपादे चतुर्थपादे च | ।।।,।।।,ऽ।ऽ,ऽ।ऽ | |
| पुष्पिताग्रा १२।१३ वृत्तिः । | अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा | |
| प्रथमपादे तृतीयपादे च | ।।।,।।।,ऽ।ऽ,।ऽऽ | करकिसलयशोभया विभान्ती कुचफलभारविनम्रदेहयष्टिः । |
| द्वितीयपादे चतुर्थपादे च | ।।।,।ऽ।,।ऽ।,ऽ।ऽ,ऽ | स्मितरुचिरविलासपुष्पिताग्रा व्रजयुवतिर्नमतो हरेर्मुदेऽभूत्॥ |
| यवमती १२।१३ वृत्तिः । | स्यादयुग्मके रजौ रजौ समे चेत् जरौ जरौ गुरुश्चैवात् परा मतीयम् | |
| प्रथमपादे तृतीयपादे च | ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽऽ | |
| द्वितीयपादे चतुर्थपादे च | ।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ,ऽ | |
| मञ्जुसौरभम् १२।१३ वृत्तिः । | यदि विषमे भवतो नजौ जरौ सजयाः समे तु जगौ मञ्जुसौरभम् | |
| प्रथमपादे तृतीयपादे च | ।।।,।ऽ।,।ऽ।,ऽ।ऽ | |
| द्वितीयपादे चतुर्थपादे च | ।।ऽ,।ऽ।,।ऽऽ,।ऽ।,ऽ | |

| छन्दसां वृत्तिनामानि । | | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|---|
| सुन्दरी १०।११ वृत्तिः । | | अयुजोर्यदि सौ जगौ युजोः सभरा लगौ यदि सुन्दरी तदा | |
| प्रथमे तृतीये पादे च | | ।।ऽ,।।ऽ,।ऽ।,ऽ | यदवोचदवेक्ष्य सुन्दरी परितः स्नेहमयेन चक्षुषा । |
| द्वितीये चतुर्थे पादे च | | ।।ऽ,ऽ।।,ऽ।ऽ,।,ऽ | अपि कंसहरस्य दुर्लभं वचनन्तद्धृदयीत विस्मयम् ॥ |
| इत्यर्द्धसमवृत्तानि समाप्तानि ॥*॥ | | | |
| अथ विषमवृत्तानि । | | | |
| उद्गता | | प्रथमे सजौ यदि सलौ च नसजगुरुकाण्यनन्तरम् । यद्यथ भनभगाः स्युरथो सजसा जगौ च भवतीयमुद्गता ॥ | |
| प्रथमे पादे | १० | ।।ऽ,।ऽ।,।।ऽ,। | विललास गोपरमणीषु तरणितनयाप्रभोद्गता । |
| द्वितीये | १० | ।।।,।।ऽ,।ऽ।,ऽ | लघुनयनचकोरयुगे दधती सुधांशुकिरणोर्मिविभ्रमम् ॥ |
| तृतीये | १० | ऽ।।,।।।,ऽ।।,ऽ | |
| चतुर्थे | १३ | ।।ऽ,।ऽ।,।।ऽ,।ऽ।,ऽ | |
| अन्यविधोद्गता | | प्रथमे सजौ यदि सलौ च नसजगुरुकाण्यनन्तरम् । यद्यथ भनजलगाः स्युरथो सजसा जगौ च भवतीयमुद्गता ॥ | |
| प्रथमे पादे | १० | ।।ऽ,।ऽ।,।।ऽ,। | अथ वासवस्य वचनेन रुचिरवदनस्त्रिलोचनम् । |
| द्वितीये | १० | ।।।,।।ऽ,।ऽ।,ऽ | क्लान्तिरहितमभिराधयितुं विधिवत्तपांसि विदधे धनञ्जयः ॥ |
| तृतीये | ११ | ऽ।।,।।।,।ऽ।,।,ऽ | इति भारवायुद्गताभेदः । १२ । १ ॥ |
| चतुर्थे | १३ | ।।ऽ,।ऽ।,।।ऽ,।ऽ।,ऽ | |
| सौरभम् | | चयमुद्गता सदृशमेव पदमिह तृतीयमन्यथा । जायते रनभगैर्ग्रथितं कथयन्ति सौरभकमेतदीदृशम् ॥ | |
| प्रथमे पादे | १० | ।।ऽ,।ऽ।,।।ऽ,। | परिभूतफुल्लशतपत्रवनविहरणात्तविभ्रमा । |
| द्वितीये | १० | ।।।,।।ऽ,।ऽ।,ऽ | कस्य चूत चरतीह हरे मुखपद्मसौरभकला सवाहृता ॥ |
| तृतीये | १० | ऽ।ऽ,।।।,ऽ।।,ऽ | |
| चतुर्थे | १३ | ।।ऽ,।ऽ।,।।ऽ,।ऽ।,ऽ | |
| ललितम् | | नयुगं सकारयुगलञ्च भवति चरणे तृतीयके । तदुदितमुरुमतिभिर्ललितं यदि शेषमस्य सकलं यथोद्गता । | |
| प्रथमे पादे | १० | ।।ऽ,।ऽ।,।।ऽ,। | व्रजसुन्दरी समदयेन मुदितमनसा स्म पीयते । |
| द्वितीये | १० | ।।।,।।ऽ,।ऽ।,ऽ | हिमकरगलितमिवामृतकं ललितं मुरारिमुखपद्मविभ्रमम् ॥ |
| तृतीये | १० | ।।।,।।।,।।ऽ,।,ऽ | |
| चतुर्थे | १३ | ।।ऽ,।ऽ।,।।ऽ,।ऽ।,ऽ | |
| वक्त्रम् | | वक्त्रं युग्भ्यां मगौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम् । | |
| प्रथमे पादे | ८ | ऽऽऽऽ।ऽऽऽ | वक्त्राम्भोजं सदा स्मेरं चञ्चल्लोलनयनं फुल्लम् । |
| द्वितीये | ८ | ऽऽऽऽ।ऽऽऽ | वल्लवीनां मुरारातेश्चेतोभृङ्गं जहारोच्चैः ॥ |
| तृतीये | ८ | ऽ।ऽऽ।ऽऽऽ | |
| चतुर्थे | ८ | ऽऽऽऽ।ऽऽऽ | |
| पथ्यावक्त्रम् | | युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्त्तितम् । | |
| प्रथमे पादे | ८ | ऽ।ऽ।।ऽऽ। | रासकेलिसतृष्णस्य कृष्णस्य मधुवासरे । |
| द्वितीये | ८ | ऽऽ।।।ऽ।ऽ | आसीद्गोपाङ्गनावीथी पथ्या वक्त्रमधुव्रतैः ॥ |
| तृतीये | ८ | ऽऽऽ।।ऽऽऽ | |
| चतुर्थे | ८ | ऽऽऽ।।ऽ।ऽ | |

## छन्दः

| छन्दसां वृत्तिनामानि । | | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
|---|---|---|---|
| अनुष्टुप् | | पञ्चमं लघु सर्व्वत्र सप्तमं द्विचतुर्थयोः । गुरु षष्ठञ्च पादानां शेषेष्वनियमो मतः ॥ प्रयोगे प्रायिकं प्राहुः केऽप्येतद्वक्रलक्षणम् । लोकेऽनुष्टुबिति ख्यातं तस्याष्टाक्षरता मता ॥ | |
| प्रथमे चरणे | ८ | ऽ।ऽ।।ऽऽ। | पञ्चमं लघु सर्व्वत्र सप्तमं द्विचतुर्थयोः । |
| द्वितीये | ८ | ऽ।ऽ।।ऽ।ऽ | गुरु षष्ठञ्च पादानां शेषेष्वनियमो मतः ॥ |
| तृतीये | ८ | ।।ऽऽ।ऽऽऽ | |
| चतुर्थे | ८ | ऽऽ।।।ऽ।ऽ | |
| इति वृषमवृत्तानि समाप्तानि ॥*॥ | | | |
| अथ मात्रावृत्तानि । | | | |
| आर्य्या अर्थात् गाथा | | लक्ष्मैतत् सप्तगणा गोपेता भवति नेह विषमे जः । षष्ठो जश्च नलघु वा प्रथमार्द्धे नियतमार्य्यायाः ॥ षष्ठे द्वितीयलात् परके न्ले मुखलाच्च सयतिपद-नियमः । चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥ | |
| प्रथमे पादे | १२ | ऽऽ।ऽ।ऽऽ | कृष्णः शिशुः सुतो मे वल्लवकुलटाभिराहृतो न गृहे । |
| द्वितीये | १८ | ऽ।।।ऽ।ऽ।ऽ।।ऽ | क्षणमपि वसत्यसर्व्ववति जगाद गोष्ठ्यां यशोदार्य्या ॥ |
| तृतीये | १२ | ।।।।।ऽ।ऽ।। | |
| चतुर्थे | १५ | ।ऽ।ऽऽ।ऽऽऽ | |
| प्रकारान्तरो यथा | | | |
| प्रथमे पादे | १२ | ऽऽ।ऽ।ऽऽ | वृन्दावने सलीलं वल्गुदमकाण्डनिहितनतुयष्टिः । |
| द्वितीये | १८ | ऽऽ।।ऽ।।।।।ऽऽ | स्मेरमुखार्पितवेणुः कृष्णो यदि मनसि कः स्वर्गः ॥ |
| तृतीये | १२ | ऽ।।ऽ।।ऽऽ | |
| चतुर्थे | १५ | ऽऽ।।।।।ऽऽऽ | |
| नवधा आर्य्या क्रमेण यथा । | | [पथ्या । | |
| पथ्या | | प्रथमगणत्रयविरतिर्दलयोरुभयोः प्रकीर्त्तिता | |
| प्रथमे पादे | १२ | ।।।।ऽ।।ऽऽ | जय जय नाथ! सुरारे! केशव! कंसान्तकाच्युतानन्त! । |
| द्वितीये | १८ | ऽ।।ऽऽ।ऽ।ऽऽऽ | कुरु करुणामिति विनतिः पथ्या भवरोगदुःस्थानाम् ॥ |
| तृतीये | १२ | ।।।।ऽ।।।।ऽ | अत्र द्वितीयपादान्तलघोर्गुरुत्वम् । |
| चतुर्थे | १५ | ऽऽ।।ऽ।ऽऽऽ | पूर्व्वपरार्द्धयोर्द्वादशमात्रायां यतिः ॥ |
| विपुला | | संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः । यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति ॥ | |
| प्रथमे पादे | १८ | ऽऽ।।ऽऽऽ।।ऽऽ | पुंसां कलिकालव्यालहतानां नास्त्युपचितिरन्यापि । |
| द्वितीये | १२ | ऽ।।।ऽऽऽ | वीर्य्यविपुला सुखे चेत् स्याद्गोविन्दाख्यमन्त्रकला ॥ |
| तृतीये | १४ | ऽ।।।ऽ।ऽऽऽ | अत्र द्वितीयचरणान्तलघोर्गुरुत्वम् । |
| चतुर्थे | १३ | ऽऽऽ।ऽ।।ऽ | पूर्व्वपरार्द्धयोर्द्वादशमात्रा संलङ्घ्य यतिः ॥ |
| चपला | | दलयोर्द्वितीयतुर्य्यौ गणौ जकारौ तु यत्र चपला सा । | |
| प्रथमे पादे | १२ | ।।ऽ।ऽ।ऽऽ | चपला न चेत् कदाचिद्रमा भवेद्भक्तिभावना कृष्णे । |
| द्वितीये | १८ | ।ऽ।ऽऽ।ऽ।ऽऽऽ | धर्म्मार्थकाममोक्षास्तदा करस्था न सन्देहः ॥ |
| तृतीये | १२ | ऽऽ।ऽ।ऽऽ | |
| चतुर्थे | १५ | ।ऽ।ऽऽ।ऽऽऽ | |
| मुखचपला | | आद्यं दलं समस्तं भजेत लक्ष्म चपलागतं यस्याः । शेषः पूर्व्वजलक्ष्मा मुखचपला सोदिता मुनिना ॥ | |
| प्रथमे पादे | १२ | ऽ।।।ऽ।ऽऽ | नन्दसुत ! पञ्चकत्वं दृढं न ते प्रेम गच्छ तत्रैव । |
| द्वितीये | १८ | ।ऽ।ऽऽ।ऽ।ऽऽऽ | यत्र भवति ते रागः कापि जगादेति मुखचपला ॥ |
| तृतीये | १२ | ऽ।।।ऽऽऽ | अत्र द्वितीयपदान्तलघोर्गुरुत्वम् ॥ |
| चतुर्थे | १५ | ऽ।।ऽऽ।।।।ऽ | |

| छन्दसां वृत्तिनामानि । | | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|---|
| जघनचपला | | प्राक्प्रतिपादितमर्द्धे प्रथमे प्रथमेतरे च चपलायाः । लप्स्याश्रयेत सोक्ता विशुद्धधीभिर्जघनचपला ॥ | |
| प्रथमे चरणे | १२ | ऽऽऽऽ।।ऽ | लम्पः श्रृङ्गारपटुर्यौवनमदचञ्चलः सुललिताङ्गः । |
| द्वितीये | १८ | ऽ।।।ऽ।ऽ।।।ऽऽ | आसीद्व्रजाङ्गनानां मनोहरो जघनचपलानाम् ॥ |
| तृतीये | १२ | ऽऽ।ऽ।ऽऽ | |
| चतुर्थे | १५ | ।ऽ।ऽ।।।।।ऽऽ | |
| गीतिः | | आर्य्याप्रथमार्द्धसमं यस्या अपरार्द्धमाह तां गीतिम् । | |
| प्रथमे चरणे | १२ | ऽ।।ऽऽऽऽ | केशववंशीगीतिर्लोकमनोहारिणहारिणी जयति । |
| द्वितीये | १८ | ऽ।।ऽ।।।ऽ।ऽ।।ऽ | गोपीमानग्रन्थिविमोचनी दिव्यगायनाचार्य्या ॥ |
| तृतीये | १२ | ऽऽऽऽऽऽ | अत्र द्वितीयचरणान्तलघोर्गुरुत्वम् ॥ |
| चतुर्थे | १८ | ।ऽ।ऽऽ।ऽ।ऽऽऽ | |
| उपगीतिः | | आर्य्यापरार्द्धतुल्ये दलद्वये प्राहुरुपगीतिम् । | |
| प्रथमे चरणे | १२ | ।।ऽ।ऽ।ऽऽ | नवगोपसुन्दरीणां रासोल्लासे मुरारातिम् । |
| द्वितीये | १५ | ऽऽऽऽ।ऽऽऽ | अस्मारयदुपगीतिः स्वर्गाङ्गरङ्गीडग्रा गीतिम् ॥ |
| तृतीये | १२ | ऽऽ।।।।ऽऽ | |
| चतुर्थे | १५ | ऽ।।ऽऽ।ऽऽऽ | |
| उद्गीतिः | | आर्य्याशकलद्वितये विपरीते पुनरिहोद्गीतिः। | |
| प्रथमे चरणे | १२ | ऽऽ।ऽ।ऽ।। | नारायणस्य सन्ततमुद्गीतिः संस्मृतिर्भक्त्या । |
| द्वितीये | १५ | ऽऽऽऽ।ऽऽऽ | अर्च्चायामासक्तिर्दुस्तरसंसारसागरे तरणिः ॥ |
| तृतीये | १२ | ऽऽऽऽऽऽ | |
| चतुर्थे | १८ | ऽ।।ऽऽ।ऽ।ऽ।।ऽ | |
| आर्य्यागीतिः | | आर्य्याप्रागदलमन्तेऽधिकगुरु तादृगपरार्द्धमार्य्यागीतिः । | |
| प्रथमे चरणे | १२ | ऽऽऽ।।।।ऽ | चर्माश्रुक्तिमितद्दृशः प्रमोदरोमाञ्चकञ्चुकाञ्चितदेहाः । |
| द्वितीये | २० | ।ऽ।ऽऽ।ऽ।ऽ।।ऽऽ | आर्य्यागीतिं भक्त्या गायन्ति श्रीपतेश्चरितसम्बद्धाम् ॥ |
| तृतीये | १२ | ऽऽऽऽऽऽ | लघुगुरुविपर्य्ययरूपप्रस्तारभेदेन बहुविधा आर्य्या भवन्ति ॥ |
| चतुर्थे | २० | ऽऽऽऽ।ऽ।।।ऽऽऽ | |
| पूर्व्वार्द्धे विंशत्याश्चतुर्विंशत्या वा मात्राणां परार्द्धे षोडशमात्राणां परे लघुवर्णचतुष्टये सति प्रथमं द्वितीयं वा लघ्वक्षरं प्राप्य आर्य्यायाः सामान्येन यतिनियमः॥ | | | |
| वैतालीयम् । अपरवक्त्रमित्येके । | | षड्विषमेऽष्टौ समे कलास्ताश्च समेस्युर्नो निरन्तरा । न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ॥ | |
| प्रथमे चरणे | १४ | ।।ऽ।।ऽ।ऽ।ऽ | कुरुषेण मदेन चर्च्चितं नव यन्निन्दति राधिके कुचम् । |
| द्वितीये | १६ | ।।ऽऽ।।ऽ।ऽ।ऽ | मदमानतनुतेऽन्न पक्तिमं तद्वैतालीयं फलं हरेः ॥ |
| तृतीये | १४ | ।।ऽ।।ऽ।ऽ।ऽ | लघुगुरुव्यत्ययेनापि बहुधा भवति ॥ |
| चतुर्थे | १६ | ऽऽऽऽऽ।ऽ।ऽ | |
| औपच्छन्दसकम् | | तत्रैवान्तेऽधिके गुरौ स्यादौपच्छन्दसकं कवीन्द्रहृद्यम् । | |
| प्रथमे चरणे | १६ | ऽऽऽऽ।ऽ।ऽऽ | आनन्दानं मुरारिकान्तास्वौपच्छन्दसकं च दा विनोदम् । |
| द्वितीये | १८ | ऽऽऽ।।ऽ।ऽ।ऽऽ | कंसं यो निर्जघान देवो वन्दे तं जगतां स्थितिं दधानम् ॥ |
| तृतीये | १६ | ऽऽऽऽ।ऽ।ऽऽ | |
| चतुर्थे | १८ | ऽऽऽ।।ऽ।ऽ।ऽऽ | |
| एतद्वैतालीयभेदः ॥ | | | |

| छन्दसां वृत्तिनामानि । | | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|---|
| पज्झटिका | | प्रतिपदयमकितषोड़शमात्रा नवमगुरुत्वविभूषितगात्रा । पज्झटिकापुनरत्र विवेकः क्वापि न मध्यगुरुर्गण एकः ॥ | |
| प्रथमे चरणे | १६ | ।।।।ऽऽऽऽऽऽ | तरलवतंसाश्लिष्टस्कन्धश्चलतरपज्झटिकाकटिबन्धः । |
| द्वितीये | १६ | ।।।।ऽ।।ऽ।।ऽऽ | मौलिचपलशिखिचन्द्रकवृन्दः कालियशिरसि नटति मुकुन्दः ॥ |
| तृतीये | १६ | ऽ।।।।।ऽ।।ऽऽ | इयं प्रतिपदयमकितषोड़शमात्रा लघुगुरुव्यत्ययेनापि बहुधा। |
| चतुर्थे | १६ | ऽ।।।।।ऽ।।ऽऽ | अस्या नवमी मात्रा च कदाचित् लघ्वी भवति ॥ |
| दोहड़िका | | मात्रा त्रयोदशकं यदि पूर्व्वं लघुकविरामि । पश्चादेकादशकम्तु दोहड़िका द्विगुणेन ॥ | |
| प्रथमे चरणे | १३ | ऽऽऽ।।।।।। | माई दोहड़िपठण शुणि हासिओ काण्ह गोआल । |
| द्वितीये | १३ | ऽ।ऽऽ।ऽऽ। | वृन्दावणघणकुञ्ज चलिओ कमलरसाल ॥ |
| तृतीये | ११ | ऽऽ।।।ऽ। | अस्यार्थः । हे मातः ! दोहड़िकापाठं श्रुत्वा कृष्णो |
| चतुर्थे | ११ | ।।ऽ।।।ऽ। | गोपालो हसित्वा कमपि रसालं चलितः कुत्र वृन्दावनघनकुञ्जे वृन्दावनस्य निविड़निकुञ्जे । राई इति क्वचित् पाठः तन्मतेन राधिकाया दोहड़िकापाठं श्रुत्वा ॥ |
| अस्या अन्त्या मात्रा लघ्वी अपभ्रंशभाषया प्रचारः ॥ इति मात्रावृत्तानि समाप्तानि ॥ * ॥ | | | गुरुलघुव्यत्ययेन बहुधा भवति ॥ |

अत्र समवृत्तानि (२४७) सप्तचत्वारिंशदधिकं द्विशतं, अर्द्धसमवृत्तानि (१५) पञ्चदश, विषमवृत्तानि (७) सप्त, मात्रावृत्तानि च (१५) पञ्चदश, समुदायेन (२८४) चतुरशीत्यधिकद्विशतसंख्यकानि छन्दांसि लिखितानीति ॥ * ॥

**छन्दकपातनः**, पुं, ( छन्दकेन छद्मना पातयति लोकानिति । पत् + णिच् + ल्युः । ) छद्मतापसः । इति जटाधरः ॥

**छन्दोगः**, पुं, ( छन्दो वेदविशेषं सामेत्यर्थः गायतीति । गै + "गापोष्टक् ।" ३।२।८। इति टक् ।) सामगः । सामवेदी । इति जटाधरः ॥ (यथा, मनुः । ३ । १४५ ।
"यत्नेन भोजयेच्छ्राद्धे बह्वृचं वेदपारगम् ।
शाखान्तगमथाध्वर्य्युं छन्दोगन्तु समाप्तिकम् ॥")

**छन्दोगपरिशिष्टं**, क्ली, ( छन्दोगेन सामगेन कात्यायनेन मुनिनेत्यर्थः । प्रणीतं यत् परिशिष्टम् । यद्वा, छन्दोगेभ्यः कृतं परिशिष्टम् ।) कात्यायनमुनिकृतं सामवेदिकर्म्मबोधकगोभिलसूत्राणां परिशेषशास्त्रम् । इति स्मृतिः ॥

**छन्दोविचितिः**, स्त्री, ( छन्दसां विचितिर्यत्र । ) श्रुतिच्छन्दसां प्रत्यायकं शास्त्रम् । इत्यमरटीकायां भरतः ॥ (यथा, बृहत्संहितायाम् । १०४ । ६४ ।
"विपुलामपि बुद्धा छन्दोविचितिं भवति कार्य्यमेतावत् ।
श्रुतिसुखदवृत्तसंग्रहमिममाह वराहमिहिरोऽतः ॥")

**छन्नं**, क्ली, (छद् + क्तः ।) रहः । निर्ज्जनस्थानम् । इति मेदिनी । ने, ५ ॥

**छन्नः**, त्रि, ( छद् + क्तः । ) छादितः । इति मेदिनी । ने, ५ ॥ (व्याप्तः । यथा, महाभारते । ३ । २० । २४ ।
"न हया न रथो वीर । न यन्ता मम दारुकः ।
अदृश्यन्त शरैश्छन्नास्तथाहं सैनिकाश्च मे ॥")
रहः । इत्यमरः । २ । ८ । २२ ॥

**छप**, इ क सर्पे । इति कविकल्पद्रुमः ॥ ( चुरां-परं-सकं-सेट् ।) इ क, छम्पयति । सर्पो गतिः । इति दुर्गादासः ॥

**छम**, उ भक्ते । इति कविकल्पद्रुमः । ( भ्वां-परं-सकं-सेट् । उदित्वात् क्त्वावेट् । ) छमति । उ, छमित्वा छान्त्वा । इति दुर्गादासः ॥

**छमण्डः**, पुं, (छमति भक्षयति जनकयशः पालकस्य पितरं नाशयतीत्यर्थः । छम + बाहुलकादण्डन् ।) स्वनपित्रकः । इत्युणादिकोषः । छेमड़ा इति भाषा । बन्धुहीनः । इति संक्षिप्तसारे उणादिवृत्तिः ॥

**छर्द्द**, क वमने । इति कविकल्पद्रुमः । (चुरां-परं-सकं-सेट् ।) वमनं वान्तिः । क, छर्द्दयति अन्नं लोकः । इति दुर्गादासः ॥ ( तथाच, महाभारते । ५ । ६६ । ४२ ।
"स्वपन्ति च प्रवमन्ति च छर्द्दयन्ति च मानवाः ॥")

**छर्द्दः**, क्ली, ( छर्द्द + भावे घञ् । ) वमनम् । इति हेमचन्द्रः । ३ । १३३ ॥

**छर्द्दनं**, क्ली, ( छर्द्द + भावे ल्युट् । ) वमनम् । इति हेमचन्द्रः ॥ ( यथा, सुश्रुते । ४ । १० ।
"तत्राश्मदन्तलाबुबिम्बीकोशातकीफलैः ।
छर्द्दनं दध्नादभिभ्यामथवा तण्डुलाम्बुना ॥")

**छर्द्दनः**, पुं, ( छर्द्दयति नरपश्वादिकं ग्रसित्वा पुनरुद्गिरतीति । छर्द्द + ल्युः ।) अलम्बुषराक्षसः । (छर्द्दयति कटुत्वेन उद्गिरत्यनेनेति । छर्द्द + ल्युट् । ) निम्बवृक्षः । इति हेमचन्द्रः ॥ मदनवृक्षः । इति भावप्रकाशः ॥

**छर्द्दापनिका**, स्त्री, ( छर्द्द वमनं आपयति प्रापयतीत्यर्थः । आप् + णिच् + ल्युः । ततः स्वार्थे कः । टापि अत इत्वञ्च । ) कर्क्कटी । इति राजनिर्घण्टः ॥

**छर्द्दिः**, स्त्री, ( छर्द्दयत्यनेनेति । छर्द्द वमने + इन् । ) वमिरोगः । वाँति इति भाषा ॥ तत्पर्य्यायः । प्रच्छर्द्दिका २ छर्द्दिम् ३ वमथुः ४ वमनम् ५ वमिः ६ । इति हेमचन्द्रः । ३ । १३३ ॥ छर्द्दिका ७ छर्द्दीका ८ वान्तिः ६ उद्गारः १० । इति राजनिर्घण्टः ॥ उत्कासिका ११ छर्द्दनम् १२ । इति शब्दरत्नावली ॥ तस्या निदानादि यथा,—
"दुष्टैर्दोषैः पृथक्सर्व्वैर्बीभत्सालोकनादिभिः ।
छर्द्दयः पञ्च विज्ञेयास्तासां लक्षणमुच्यते ॥
अतिद्रवैरतिस्निग्धैरहृद्यैर्लवणैरति ।
अकाले चातिमात्रैश्च तथा सात्म्यैश्च भोजनैः ॥
श्रमाद्भयात्तथोद्वेगादजीर्णात् क्रिमिदोषतः ।
नार्य्याश्चापन्नसत्त्वायास्तथातिद्रुतमश्नतः ॥
बीभत्सैर्हेतुभिश्चान्यैर्द्रुतमुत्क्लेशितो बलात् ।
छादयन्नाननं वेगैरर्द्दयन्नङ्गभञ्जनैः ॥
निरुच्यते छर्द्दिरिति दोषो वक्त्रं प्रधावितः ॥"
तस्याः पूर्व्वरूपं यथा,—
"हृल्लासोद्गाररोधौ च प्रसेको लवणस्तनुः ।
द्वेषो भक्ते च पाने च वमीनां पूर्व्वलक्षणम् ॥"
वातजायास्तस्या रूपं यथा,—
"हृत्पार्श्वपीड़ासुखशोषशीर्षनाभ्यर्त्तिकासस्वरभेदतोदैः ।
उद्गारशब्दप्रबलं सफेनं
विच्छिन्नकृष्णं तनुकं कषायम् ॥
कृच्छ्रेण चाल्पं महता च वेगेनार्त्तोऽनिलाच्छर्द्दयतीह दुःखम् ॥"
तस्याः पित्तजायाः रूपं यथा,—
"मूर्च्छा पिपासा मुखशोषमूर्द्धताल्वक्षिसन्तापतमोभ्रमार्त्तः ।

पीतं भृशोष्णं हरितं सतिक्तं
धूम्रञ्च पित्तेन वमेत् सदाहम् ॥"

तस्याः श्लेष्मजाया रूपं यथा,—

"तन्द्रास्यमाधुर्य्यकफप्रसेक-
सन्तोषनिद्रारुचिगौरवार्त्तः ।
स्निग्धं घनं स्वादु कफाद्विशुद्धं
सलोमहर्षोऽल्परुजं वमेच्च ॥"

तस्यास्त्रिदोषजाया रूपं यथा,—

"शूलाविपाकारुचिदाहतृष्णा-
श्वासप्रमोहप्रबलाप्रसक्तम् ।
छर्द्दिस्त्रिदोषाल्लवणाम्लनील-
सान्द्रोष्णरक्तं वमतां नृणां स्यात् ॥"

असाध्याया लक्षणं यथा,—

"विट्स्वेदमूत्राम्बुवहानि वायुः
स्रोतांसि संरुध्य यदोर्द्ध्वमेति ।
उत्सन्नदोषस्य समाचितं तं
दोषं समुद्धूय नरस्य कोष्ठात् ॥
विण्मूत्रयोस्तत्समगन्धवर्णां
तृट्श्वासकासार्त्तियुतं प्रसक्तम् ।
प्रच्छर्द्दयेद्दुष्टमिहातिवेगा-
त्तयार्द्दितस्त्वाशु विनाशमेति ॥"

आगन्तुजाया लक्षणं यथा,—

"वीभत्सजा दौर्हृदजामजा तु
असात्म्यजा या क्रिमिजा च या हि ।
सा पञ्चमी ताञ्च विभावयेच्च
दोषोच्छ्रयेणैव यथोक्तमादौ ॥"

क्रिमिजाया लक्षणं यथा,—

"शूलहृल्लासबहुला क्रिमिजा च विशेषतः ।
क्रिमिहृद्रोगतुल्येन लक्षणेन च लक्षिता ॥
क्षीणस्य या च्छर्द्दिरतिप्रसक्ता
सोपद्रवा शोणितपूययुक्ता ।
सचन्द्रिकां तां प्रवदेदसाध्यां
साध्याञ्चिकित्सेन्निरुपद्रवाञ्च ॥"

तस्या उपद्रवा यथा,—

"कासः श्वासो ज्वरो हिक्का तृष्णा वैचित्त्य-
मेव च ।
हृद्रोगस्तमकश्चैव ज्ञेयाश्छर्द्देरुपद्रवाः ॥"
इति माधवकरः ॥

तस्यौषधं यथा, गारुडे १८७ अध्याये ।

"अश्वगन्धाभया चैव उदकेन समं पिबेत् ।
हरीतकीकुष्ठचूर्णं कृत्वा आस्यञ्च पूरयेत् ॥
शीतं पीत्वाथ पानीयं सर्व्वच्छर्द्दिनिवारणम् ।
गुडूचीपद्मकारिष्टधन्याकं रक्तचन्दनम् ॥
पित्तश्लेष्मज्वरच्छर्द्दिदाहतृष्णाघ्नमग्निकृत् ॥"

अपिच ।

"बिल्वमूलञ्च समधु गुडूचीकथितं जलम् ।
पीतं हरेच्च त्रिविधां छर्द्दिं वै नात्र संशयः ॥
पीता दूर्व्वा च्छर्द्दिं नश्येत् पिष्टा तण्डुलवारिणा ॥"
इति च गारुडे १९४ अध्यायः ॥ * ॥

अथ छर्द्दिचिकित्सा ।

"आमाशयोत्क्लेशभवा हि सर्व्वा-
श्छर्द्द्यो मता लङ्घनमेव तस्मात् ।
विधीयते मारुतजां विना तु
संशोधनं वा कफपित्तहारि ॥"

अथ च्छर्द्दीशब्दः ।

"हन्यात् क्षीरोदकं पीतं छर्द्दिं पवनसम्भवाम् ।
मुद्गामलकयूषो वा ससर्पिष्कः ससैन्धवः ॥
क्षीरोदकं नाशितस्य क्षीरस्योदकम् ।
गुडूचीत्रिफलानिम्बपटोलैः क्वथितं जलम् ।
पिबेत् मधुयुतं तेन छर्द्दिर्नश्यति पित्तजा ॥
हरीतकीनां चूर्णन्तु लिह्यान्माक्षिकसंयुतम् ।
अधोमार्गीकृते दोषे छर्द्दिः शीघ्रं निवर्त्तते ॥
विडङ्गत्रिफलाविश्वाचूर्णं मधुयुतं पिबेत् ।
विडङ्गप्लवशुण्ठीनां चूर्णं वा कफजां वमिम् ॥
प्लवं कैवर्त्तीमुस्तं गुडतृणी इति लोके ।
पिष्ट्वा धात्रीफलं लाजान् शर्कराञ्च पलोन्मिताम् ।
दत्त्वा मधुपलञ्चापि कुडवं सलिलस्य च ॥
वाससा गालितं पीतं हन्ति छर्द्दिं त्रिदोषजाम् ।
गुडूच्या रचितं हन्ति हिमं मधुसमन्वितम् ॥
दुर्निवारामपि छर्द्दिं त्रिदोषजनितां बलात् ॥
एलालवङ्गगजकेशरकोलमज्जा-
लाजाप्रियङ्गुघनचन्दनपिप्पलीनाम् ।
चूर्णानि माक्षिकसितासहितानि लीढ्वा
छर्द्दिं निहन्ति कफमारुतपित्तजाताम् ॥
इति एलादिचूर्णम् ॥
अश्वत्थवल्कलं शुष्कं दग्धं निर्व्वापितं जले ।
तज्जलं पानमात्रेण छर्द्दिं जयति दुर्ज्जयाम् ॥
यथा त्रिकटुधान्याकजीरकाणां रजो.लिहन् ।
मधुना नाशयेच्छर्द्दिमरुचिञ्च त्रिदोषजाम् ॥
बिल्वत्वचो गुडूच्या वा क्वाथः क्षौद्रेण संयुतः ।
छर्द्दिं त्रिदोषजां हन्ति पर्पटः पित्तजां तथा ॥
आम्राश्मबिल्वनिर्यूहः पीतः समधुशर्करः ।
निहन्याच्छर्द्दिमतीसारं वैश्वानर इवाहुतिम् ॥
निर्यूहः क्वाथः ।
जम्ब्वाम्रपल्लवरसं लाजरसःसंयुतं शीतम् ।
शमयति मधुना युक्तं वमिमतिसारं तृषार्त्ति-
मुग्राम् ॥
वीभत्सजां हृद्यतमैरिष्टैर्दौर्हृदजां फलैः ।
लङ्घनेरामजां छर्द्दिं जयेत सात्म्यै रसात्म्यजाम् ॥
क्रिमिहृद्रोगवद्धन्याद्वमिं क्रिमिसमुद्भवाम् ।
तत्र तत्र यथा दोषं क्रियां कुर्य्याच्चिकित्सकः ॥
इति छर्द्द्यधिकारः ।" इति भावप्रकाशः ॥

छर्द्दिः, [स] स्त्री, (छर्द्दयति छर्द्द्यते इति वा । छर्द्द वमने + "अर्चिशुचिहुसृपिच्छादिछर्द्दिभ्य इसिः ।" उणां । २ । १०८ । इति इसिः ।) वमिः । इत्यमरादिकोषः ॥ (यथा, चरके चिकित्सास्थाने २३ अध्याये ।
"तदग्निवेशस्य वचो निशम्य
प्रीतो भिषक्श्रेष्ठ इदं जगाद ।
छर्द्दीः पि यानीह पुरोदितानि
विस्तारतस्तानि निबोध सम्यक् ॥")

छर्द्दिका, स्त्री (छर्द्दि + स्वार्थे कन् । स्त्रियां टाप् । यद्वा, छर्द्दयतीति । छर्द्दि + ण्वुल् । टापि अत इत्वञ्च ।) छर्द्दिः । विष्णुक्रान्ता । इति राजनिर्घण्टः ॥

छर्द्दिकारिपुः, पुं, (छर्द्दिकाया रिपुः नाशक इत्यर्थः ।) सूक्ष्मैला । इति शब्दचन्द्रिका ॥

छर्द्दिघ्नः, पुं, (छर्द्दिं हन्तीति । हन् + टक् ।) निम्बवृक्षः । इति रत्नमाला ॥ (निम्बशब्देऽस्य विवरणं ज्ञेयम् ॥)

छलं, क्ली, (छो + वृषादित्वात् कलच् । यद्वा, छल + अच् ।) स्खलितम् । शाठ्यम् । इति मेदिनी । ले, १७ ॥ (यथा, मनुः । ८ । ४९ ।
"धर्म्मेण व्यवहारेण छलेनाचरितेन च ।
प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च ॥" .
व्याजः । यथा, मार्कण्डेये । २५ । १० ।
"सा वै मदालसा पुत्त्रं बालमुत्तानशायिनम् ।
उल्लापनच्छलेनाह रुदमानमविस्वरम् ॥"
तात्पर्य्यान्तरेण प्रयुक्तस्य शब्दस्यार्थान्तरेण कथनम् । यथा, अक्षपादसूत्रे । ५० ।
"वचनविघातोऽर्थविकल्पोपपत्त्या छलम् ॥"
"अर्थस्य वाद्यभिमतस्य यो विकल्पो विरुद्धः कल्पः अर्थान्तरकल्पनेति यावत् तदुपपत्त्या युक्तिविशेषेण यो वचनस्य वाद्युक्तस्य विघातो दूषणं तच्छलमित्यर्थः । वक्तृतात्पर्य्याविषयार्थ-कल्पनेन दूषणाभिधानमिति फलितम् । तात्-पर्य्याविषयत्वं विशेष्ये विशेषणे संसर्गे वा । यथा, नेपालादागतोऽयं नवकम्बलवत्त्वादित्यत्र नव-संख्यापरत्वकल्पनयाऽसिद्ध्यभिधानम् । प्रमेयं धर्म्मत्वादित्यत्र पुण्यत्वार्थकल्पनया भागासिद्ध्य-भिधानम् । वह्निमान् धूमादित्यत्र धूमावयवे व्यभिचाराभिधानम् । तत्त्रिविधम् । वाक्छलं सामान्यच्छलमुपचारच्छलञ्च ॥" "छलं नाम परिशठमर्थाभासमपार्थकं वाग्वस्तुमात्रमेव । तद्द्विविधं वाक्छलं सामान्यच्छलञ्च । तत्र वाक्-छलं नाम यथा कश्चिद्ब्रूयात् नवतन्त्रोऽयं भिषगिति भिषग् ब्रूयात् नाहं नवतन्त्र एकतन्त्रो-ऽहमिति । परो ब्रूयात् नाहं ब्रवीमि नव तन्त्राणि तवेति अपितु नवाभ्यस्तं ते तन्त्रमिति भिषग् ब्रूयात् न मया नवाभ्यस्तं तन्त्रं अनेकधाभ्यस्तं मया तन्त्रमिति । एतद्वाक्छलम् । सामान्यच्छलं नाम यथा, व्याधिप्रशमनायौषध-मित्युक्ते परो ब्रूयात् सत् सत्प्रशमनायेति भवा-नाह सन्रोगः सदौषधं यदि च सत्प्रशमनाय भवति सत्कासः सत्क्षयः सत्सामान्यात् कासस्त्व-क्षयप्रशमनाय भविष्यतीति एतत्सामान्य-च्छलम् ॥" इति चरके विमानस्थाने अष्टम अध्याये ॥)

छलिः, स्त्री, (छदं छादनं लातीति । ला + बाहुलकात् किः ।) त्वक् । इति शब्दरत्नावली ॥ छाल इति भाषा ॥

छली, स्त्री, (छदं छादनं लातीति । ला + किः । ततः कृदिकारादिति वा ङीष् ।) वीरुत् । सन्तानः । वल्कलम् । कुसुमविशेषः । इति मेदिनी । ले, १८ ॥

छविः, स्त्री, (छाति खण्डं करोति यद्वा छ्यति छिनत्ति दूरीकरोति मालिन्यादिकमिति । छो + "कृशृशल्पिकल्पिछविश्रुविकिर्कीर्दिवि ।"

तर:, पुं, ( तॄ तरणे + "ऋदोरप् ।" ३।३।५७। इति अप् । ) तरणम् । ( यथा, मनु: । ८ । ४०४ ।
"पणं यानं तरे दाप्यं पौरुषोऽर्द्धपणं तरे ॥")
क्षयागु: । इति मेदिनी । रे, ४० ॥ तम: । इति भूरिप्रयोग: ॥ ("तरतमौ द्विबहूनामेकोत्कर्षे ।" इति मुग्धबोधसूत्रात् प्रत्ययविशेषश्च ॥)

तर:, [ स् ] क्ली, ( तॄ प्लवनतरणयो: + करणादौ यथायथं असुन् । ) बलम् । ( यथा, रघु: । ११ । ७७ ।
"विभ्रतु प्रधनमेवमप्यहं
तुल्यबाहुतरसा जितस्त्वया ॥" )
वेग: । नीरम् । प्लवग: । इति शब्दरत्नावली ॥

तरक्ष:, पुं, (तरक्षु + पृषोदरात् उलोप: ।) तरक्षु: । इत्यमरटीकायां भरत: ॥ ( यथा, बृहत्संहितायाम् । १२ । ६ ।
शैलकूटेस्तरक्षर्क्षशार्द्दूलशाखामृगाध्यासितै: ॥)

तरक्षु:, पुं, ( तरं बलं मार्गं वा क्षिणोति । क्षिणु हिंसायाम् + मितद्र्वादित्वात् डु: । ) व्याघ्रविशेष: । नेकड़े बाघ इति भाषा ॥ तत्पर्य्याय: । मृगाद्: २ मृगादन: ३ तरक्षुक: ४ । इति शब्दरत्नावली ॥ (यथा, हरिवंशे । १६३ । १४ ।
"ततो मायां परां चक्रे देवशत्रु: प्रतापवान् ।
सिंहान् व्याघ्रान् वराहांश्च तरक्षूनृक्षवा-
नरान् ॥")

तरक्षुक:, पुं, ( तरक्षु + स्वार्थे कन् । ) तरक्षु: । इति शब्दरत्नावली ॥

तरङ्ग:, पुं, ( तरति प्लवते इति । तॄ + "तरत्यादिभ्यश्च ।" उणा । १ । ११९ । इति अङ्गच् । ) वायुना नद्यादिजलस्य तिर्य्यगूर्द्ध्वप्लवनम् । ढेउ इति भाषा ॥ तत्पर्य्याय: । भङ्ग: २ ऊर्म्मि: ३ वीचि: ४ । इत्यमर: ॥ ऊर्म्मी ५ वीची ६ विचि: ७ लहरी ८ हल्ली ९ विलि: १० । इति भरत: ॥ लहरि: ११ । इति सारसुन्दरी ॥ जललता १२ भङ्गि: १३ । इति हारावली ॥ उत्कलिका १४ ऊर्म्मिका १५ । इति जटाधर: ॥ वस्त्रम् । हयादीनां समुत्फाल: । इत्युणादिकोष: ॥

तरङ्गिणी, स्त्री, ( तरङ्गो वीचिरस्त्यस्या इति । तरङ्ग + "अत इनिठनौ ।" इति इनि: । ) नदी । इत्यमर: । १ । १० । ३० ॥ ( यथा, माघ: ।
"तरङ्गिणी वेणिरिवायता भुव: ॥" )

तरणं, क्ली, ( तॄ + भावे ल्युट् । ) प्लवनपूर्व्वकदेशान्तरगमनम् । इति दुर्गादास: ॥ पारगमनम् । सन्तरणञ्च । यथा, मोहमुद्गरे । ६ ।
"क्षणमपि सज्जनसङ्गतिरेका
भवति भवार्णवतरणे नौका ॥"

तरण:, पुं, ( तीर्य्यतेऽनेनेति । तॄ + करणे ल्युट् । ) भेलक: । इति त्रिकाण्डशेष: ॥ स्वर्ग: । इति शब्दसन्दर्भसिन्धु: ॥

तरणि:, स्त्री, ( तीर्य्यतेऽनयेति । तॄ + "अर्त्तिसृधृधमीति ।" उणा । २ । १०३ । इति अनि: । ) नौका । ( यथा, आर्य्यासप्तशत्याम् । ३९० ।
"त्वामनुधावति तरणिस्तदपि गुणाकर्षतरलेयम् ॥")
घृतकुमारी । इत्यमर: । ४ । २ । ७३ ॥

तरणि:, पुं, ( तरति पापमनेनेति । तॄ + अनि: । ) सूर्य्य: । ( यथा, देवीभागवते । ३ । ६ । २८ ।
"इत्युक्त्वा तरणि: कुन्तीं तन्मनस्कां सुलज्जिताम् ।
भुक्त्वा जगाम देवेशो वरं दत्त्वाभिवाञ्छितम् ॥")
अर्कवृक्ष: । इत्यमर: ॥ भेलक: । ( यथा, वोपदेवप्रशंसाश्लोक: ।
"सोऽयं व्याकरणार्णवैकतरणिर्धातुर्थचिन्तामणि-
र्जीयात् कोविदगर्व्वपर्व्वतपवि: श्रीवोपदेव: कवि: ॥" )
किरण: । इति हेमचन्द्र: ॥

तरणिपेटक:, पुं, (तरणि: पेटक इव । ) काष्ठाम्बुवाहिनी । इति जटाधर: ॥

तरणिरत्नं, क्ली, ( तरणि: सूर्य्यस्तत्प्रियं रत्नम् । ) माणिक्यम् । इति राजनिर्घण्ट: ॥

तरणी, स्त्री, (तरणि: । कृदिकारादिति वा ङीष् ।) नौका । इति शब्दरत्नावली ॥ पद्मचारिणी । इति शब्दचन्द्रिका ॥ घृतकुमारी । इत्यमरटीकायां भरत: ॥

तरण्ड:, पुं, क्ली, (तरति प्लवत इति । तॄ प्लवनतरणयो: + बाहुलकात् अण्डच् । ) । वड़िशीसूत्रबद्धकाष्ठादि । प्लव: । नौका । इति मेदिनी । डे, २९ ॥ कुम्भतुम्बीरम्भादिसञ्चर: । इति शब्दरत्नावली ॥

तरण्ड:, पुं, देशविशेष: । इति शब्दरत्नावली ॥

तरण्डपादा, स्त्री, ( तरण्ड: प्लवनशील: पाद: प्रायेण तुरीयांशो यस्या: । ) नौका । इति शब्दरत्नावली ॥

तरण्डी, स्त्री, (तरत्यनयेति । तॄ + अण्डच् । गौरादित्वात् ङीष् ।) नौका । इति शब्दरत्नावली ॥ ( तरण्डा । इति हारावलीधृतपाठ: । ५५ ॥ )

तरत्, [ द् ] स्त्री, ( तरत्यनेनेति । तॄ + बाहुलकाददि: । ) प्लव: । ( तरतीति । तॄ + कर्त्तरि अदि: ।) कारण्डवपक्षी । इति मेदिनी । दे, २९ ॥

तरदी, स्त्री, कण्टकिवृक्षभेद: । तत्पर्य्याय: । तारदी २ तीव्रा ३ खर्ज्जुरा ४ रक्तबीजका ५ । अस्या गुणा: । तिक्तत्वम् । मधुरत्वम् । गुरुत्वम् । बल्यत्वम् । कफनाशित्वञ्च । इति राजनिर्घण्ट: ॥

तरन्त:, पुं, ( तरतीति । तॄ + "तॄभूवहिवसीति ।" उणा । ३ । १२८ । इति झच् ।) भेक: । आसार: । ( तीर्य्यते इति । + कर्म्मणि झच् । ) समुद्र: । इत्युणादिकोष: ॥

तरन्ती, स्त्री, ( तीर्य्यतेऽनयेति । तॄ + झच् । ततो ङीष् । ) तरि: । इत्युणादिकोष: ॥

तरपण्यं, क्ली, ( तॄ + भावे अप् । तरस्तरणं तस्य पणनम् । ) आतर: । इत्यमर: । १ । १० । ११ ॥ नौका भाड़ा इति भाषा ॥

तरम्बुजं, क्ली, ( तरं तरलं अम्बुवत् जायतेऽत्र । जन + बहुलवचनात् ड: ।) फलविशेष: । तरमुज इति ख्यात: । यथा, उत्तरकामाख्यातन्त्रे ।
"ज्येष्ठे मासि महेशानि ! पौर्णमास्यां निशार्द्धके ।
तृष्णातुरा महाकाली भ्रमन्ती पितृकानने ॥
तज्ज्ञात्वा ब्रह्मणा तस्यै फलं दत्तं तरम्बुजम् ।
तत्फलभक्षणात्तुष्टा वरदा सा हरप्रिया ॥
यो मे दद्यात् फलं रम्यं स चिरायुश्चतुर्युगम् ॥"

तरल:, पुं, ( तॄ + "वृषादिभ्यश्चित् ।" उणा । १ । १०८ । इति कलप्रत्ययश्चित्त्वञ्च ।) हार: । हारमध्यमणि: । ( यथा, महाभारते । ८ । ९४ । १९ ।
"प्रकीर्णका विप्रकीर्णाश्च राजन् !
प्रवालमुक्तातरलाश्च हारा: ॥")
तलम् । इत्यजयपाल: ॥ ( जनपदविशेष: । तद्देशवासिनि बहुवचनान्त: । यथा, महाभारते । ८ । ८ । २० ।
"वत्सान् कलिङ्गान् तरलानश्मकानृषिका-
[नपि ॥")

तरल:, त्रि, ( तॄ + कलच् । ) चल: । ( यथा नैषधे । ५ । २४ ।
"अथ: स्वभावमधुरैरनुभावै-
स्तावकैरतितरां तरला: स्म: ॥")
पिङ्ग: । भास्वर: । इति मेदिनी । ले, ९५ ॥ मध्यशून्यद्रव्यम् । इति धरणि: । द्रवीभूतश्च ॥

तरललोचना, स्त्री, (तरले चञ्चले लोचने यस्या: ।) चञ्चलनयना नारी । इति हेमचन्द्र: ॥

तरला, स्त्री, ( तॄ + कलच् टाप् च । ) यवागू: । सुरा । इति मेदिनी । ले, ९६ ॥ मधुमक्षिका । इति हेमचन्द्र: ॥

तरलितं, त्रि, (तरलं तारल्यमस्य जातम् । तरल + इतच् । तरल इवाचरति तरलं करोतीति तरल + क्विप् + णिच् + क्त इति केचित् । ) जाततारल्यम् । तत्पर्य्याय: । प्रेङ्खोलितम् २ लुलितम् ३ प्रेङ्खितम् ४ द्रुतम् ५ चलितम् ६ कम्पितम् ७ धुतम् ८ वेल्लितम् ९ आन्दोलितम् १० । इति हेमचन्द्र: ॥ (यथा, गीतगोविन्दे । १२ । १५ ।
"व्यालोल: केशपाशस्तरलितमलकै: स्वेदलोलौ कपोलौ ॥")

तरवारि:, पुं, ( तरं ममागतविपक्षबलं वारयतीति । वृ + णिच् + इन् । ) खड्ग: । तरवार इति भाषा । इति हेमचन्द्र: । ३ । ४४५ ॥

अथ खड्गपरीक्षा ।
"अङ्गं रूपं तथा जातिर्नेत्रारिष्टे च भूमिका ।
ध्वनिर्मानमिति प्रोक्तं खड्गज्ञानाष्टकं शुभम् ॥
अभिन्ने दृश्यते यादृक् विभिन्ने घटिते तथा ।
यदेव दृश्यते चिह्नं तदङ्गं संप्रचक्षते ॥
नीलकृष्णादिकं खड्गे रूपमित्यभिधीयते ।
तेनैव यत् प्रतीतं स्यात् तज्जातिरिति गद्यते ॥
अङ्गातिरिक्तं यज्जातिस्तन्माहात्म्योपसूचकम् ।
तन्नेत्रमिति जानीयात् खड्गे खड्गविशारदा: ॥
अङ्गातिरिक्तं खड्गादियच्छुभत्वापसूचकम् ।
तदरिष्टमिति प्राहुर्भूमिरङ्गादिधारणम् ॥

यः खड्गे जायते शब्दो नखस्फोटादिनाहते ।
स ध्वनिस्तु जनानामां श्रवणमखविधाश्छदम् ॥
पश्चाद्या निपुणैः खड्गे सम्भाव्यन्तेऽपि लक्षिमाः ।
अन्यावकत्रिमौ ज्ञेयौ तावेव सहजाविति ॥
शुभमङ्गानि चत्वारि रूपाणि जायतस्तथा ।
त्रिंशन्नेत्राणि जानीयाद्दरिष्टानि तथैव च ॥
भूमिश्च द्विविधा ज्ञेया ध्वनिरष्टविधो मतः ।
मानन्तु द्विविधं प्रोक्तमित्येषां संग्रहो मतः ॥" ॥
अथ खड्गस्य शुभाङ्गगणना लौहार्णवे ।
"रूप्यस्वर्णगणोत्पलकदमनस्थलाङ्गकण्वारुणा श्वेता-
म्भोजगदानिलामलकशाग्रस्थिरस्थिरासेत्तिराः ।
मालाश्रीरकषट्पदोडुमरिचश्यालाश्ववर्षाङ्गन
श्रीहस्तुमकर्मचिकातुषयवव्रीहिक्षमासर्षपाः ॥
सिंहीसकुलगोशिराशिवमनखग्राहादिकेशोपल-
द्रोणीकाकपालपत्रतुवरीविम्बीफलीसर्षपाः ।
नीलीरक्तवचारसोनसुमनाजिह्वाशमीरोहित-
प्रोष्ठीमारिषमार्कवाखुरतडिच्छ्वाद्विगुञ्जाशराः ॥
दूर्वाविल्वमसूरटङ्कपटीमार्जारिकार्कसकी-
मूर्वावचकलायचम्पकमलान्यग्रोधवंशासनाः ।
व्यङ्गीजालपिपीलिकानलरजः कुशाक्षरोम-
सूची
कर्कन्धुर्वकुलारनालमहिषस्वक्षुण्णवक्रा इति ॥
प्रोक्ता लौहविशारदेन मुनिना खड्गस्य भेदाः
क्रमात् ॥"
अथ तस्य चत्वारि रूपाणि ।
"नीलः कृष्णः पिशङ्गश्च धूम्रश्चेति चतुर्विधः ।
वर्णप्रकर्षः खड्गानां कथितो मुनिपुङ्गवैः ॥"
अथ चतस्रो जातयः ।
"ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चेति चतुर्विधः ।
जातिभेदो विनिर्दिष्टः खड्गानां मुनिपुङ्गवैः ॥"
अथ त्रिंशन्नेत्राणि ।
"चक्रं पद्मं गदा शङ्खो श्रमरह्वेगुरङ्कुशः ।
छत्रं पताका वीणा च मत्स्यलिङ्गध्वजेन्द्रयः ॥
कुम्भः शूलश्च शार्दूलः सिंहः सिंहासनं गजः ।
हंसो मयूरो जिह्वा च दशनः खड्ग एव च ॥
पुत्रिका चामरं शैलः पुष्पमाला भुजङ्गमः ।
त्रिंशदेतानि नेत्राणि खड्गानां कथितानि वै ॥"
अथ त्रिंशदरिष्टानि ।
"छिद्रं काकपदं रेखा भिन्नं भेकश्च मूषिकः ।
विडालः शर्करा नीली मशको भङ्गवृश्चिकं ॥
त्रिबिन्दुः कालिका दारी कपोतः काक एव च ।
खर्परः शकली क्रोडी कुशपत्रकणालिकं ॥
करालकङ्कखर्जूरभृङ्गपुच्छखनित्रकम् ।
लाङ्गलं वडिशाखाख्य मुनिना तत्त्ववेदिना ॥
प्रोक्तान्येतान्यरिष्टानि खड्गानां त्रिंशदेव हि ॥"
अथ द्विविधा भूमिः ।
"दिव्यभौमविभागेन भूमिस्तु द्विविधा भवेत् ।"
अथाष्टधा ध्वनिः ।
"हंसकांस्याश्वढक्कानां काकतन्त्रीखराश्मनाम् ।
ध्वनयोऽष्टविधाः प्रोक्ता नागार्जुनमुनेर्मताः ॥"
अथ द्विविधं मानम् ।
"उत्तमाधमभेदेन मानं तद्द्विविधं भवेत् ।
इति प्रोक्तानि रूपाणि खड्गानां शास्त्रवेदिभिः ।
एतानि तत्त्वतो ज्ञात्वा भवेन्नृपतिपूजितः ॥"
इति रूपाध्यायः ॥ * ॥
तत्र प्रथमतोऽङ्गानां लक्षणानि निबोधत ॥
लौहप्रदीपे ।
"रूप्यपत्रसमा भूमिरङ्गं श्वेतं प्रतीयते ।
ऊर्द्ध्वं नतं महामूल्यं रूप्यवच्चमुषन्ति तम् ॥
एष खड्गवरो दद्याल्लक्ष्मीमायुर्यशो बलम् ॥१॥
स्वर्णरेखा वली तन्वी यद्भूमौ निकषोपमा ।
स्वर्णवज्रमिति प्राहुरायुर्लक्ष्मीजयप्रदम् ॥२॥
गजमुक्ताकृतिर्भूमौ छायायामङ्गसम्भवः ।
गजवज्रमिति प्राहू रक्तस्पर्शे तु तद्विषेत् ॥
ज्वरादिव्याधिशमनं तस्य प्रक्षालनाम्भसा ।
अपि क्षीणोऽपि भूपालस्तद्वीर्य्यात् साधयेन्
महीम् ॥३॥
एरण्डबीजप्रतिममङ्गं भूमिः सितेतरा ।
सन्धुरवज्रमिदं नाम्ना शत्रुदर्पक्षयङ्करः ॥
एतस्य स्पर्शमात्रेण नरः सन्धिसुच्यते ।
महिषाख्यमिदं वज्रं केचिदाहुर्मनीषिणः ॥४॥
अङ्गं दमनपत्राभं खड्गे यस्मिन् प्रतीयते ।
विद्याद्दमनवज्रञ्च तज्ज्ञेयं द्विविधं बुधैः ॥
नीला शुभ्रा भवेद्भूमिस्तत्र नीला गरीयसी ।
तस्मिन् पर्युषितं तोयं गन्धे दमनकोपमम् ॥
तत्प्रभावान्महीपालः कृत्स्नां पृथ्वीं हि साध-
येत् ॥५॥"
शार्ङ्गधरस्य ।
"एका स्थूला सिता रेखा भूमिर्नीला दृढा यदि ।
स्थूलाङ्गमङ्गवज्रं तद्विद्याल्लक्ष्मीयशःप्रदम् ॥
एतत्स्पृष्टे भवेत्क्रोधः स्थूलश्चिरतरस्थितिः ।
एतं महात्ममपरे वदन्ति खड्गकोविदाः ॥६॥
छटायां दृश्यते भूमौ अङ्गञ्च प्रतिबिम्बितम् ।
अङ्गवज्रं भवेत्तस्य द्विधाभूमिः सितासिता ॥७॥"
लौहप्रदीपेऽपि ।
"निरङ्गं रूप्यपत्राभमीषन्मणिनिभञ्च यत् ।
दुर्लभं तन्महामूल्यं कान्तलौहं प्रचक्षते ॥
कृष्णा भूमिर्भवेत् स्वच्छा पीता वज्राङ्गसङ्गता ।
कृष्णवज्रमिति प्राहुस्तत्स्पृष्टे मोह उच्यते ॥"
प्रदीपेऽपि ।
"कृष्णा भूमिः सुवर्णाभमीषच्छक्लाङ्गमङ्गतम् ।
डाहुलावज्रकं विद्यात् कालभं शमथापरे ॥८॥
अरुणं सूक्ष्ममङ्गं चेदङ्गं भूमिः सितेतरा ।
अरुणाख्यमिदं वज्रं शत्रुदर्पनिसूदनम् ॥
सूर्यांशुस्पर्शमात्रेण वह्निरूपां वमेत शिखाम् ।
तस्य स्पर्शनमात्रेण पद्मकोषः स्फुटेन्निशि ॥
दुर्लभं तन्मनुष्याणां भाग्यैः कुत्रापि लभ्यते ।
तद्दृष्टोऽजनसङ्घस्य रिष्टं नाशयति ध्रुवम् ॥९॥
श्वेतास्तिसो यदा रेखा आमूलादुपलक्ष्यते ।
श्वेताङ्गमिति तद्विद्याद्यशोलक्ष्मीबलप्रदम् ॥१०॥
अम्भोजदलसङ्काशमङ्गं भूमिः सितेतरा ।
अम्भोजवज्रं तज्ज्ञेयं कथितं मुनिपुङ्गवैः ॥११॥
अङ्गं यस्य गदाकारं भूमिश्चैव सितेतरा ।
गदावज्रमिदं ब्रूयात् तत्स्पृष्टे शूलसम्भवः ॥१२॥
अङ्गं कृष्णतिलाकारं भूमिश्चैव सितासिता ।
तिलवज्रमिदं ज्ञेयं लक्ष्मीबलयशःप्रदम् ॥
तत्स्पृष्टे तिलतैलाभा वसा प्रच्यवतेऽधिकम् ॥१३॥
धूम्रवर्णा भवेद्भूमिरङ्गं वह्निशिखोपमम् ॥
अग्निवज्रमिदं ज्ञेयं शत्रूणां दाहकारकम् ।
अत्र शीतोदकं न्यस्तं तप्तं भवति च क्षणात् ॥
प्राणी वह्निं वमेद्यस्तु तथा सूर्यांशुसङ्गमात् ।
तत्स्पृष्टे बलवान् दाहो दग्धवच्च व्रणो भवेत् ॥
एतत् परमभाग्येन लभ्यते धरणीतले ॥१४॥
भूमिः सिता सिता वापि अङ्गञ्चेत् पिप्पली-
प्रभम् ॥
कणावज्रमिदं ज्ञेयमस्मद्दाहस्तु तत्स्पृष्टे ॥१५॥
कृष्णाभूमिर्यदैवाङ्गे दृश्यते ग्रन्थिसञ्चयः ॥
ग्रन्थिवज्रमिदं ज्ञेयं वैरिपक्षविनाशनम् ।
तत्स्पृष्टे बलवान् दाहस्तृषा च ज्वर एव च ॥१६॥
शालपर्णीदलाकारमङ्गं कृष्णासिपुत्रिका ।
स्थिरावज्रमिदं प्राहुस्तत्स्पृष्टे वेपथुर्भवेत् ॥१७॥
यदा तित्तिरिपक्षाभमङ्गं भूमिः सितेतरा ।
एतत्तित्तिरिवज्रं स्यात् तत्स्पृष्टे चक्षुर्वेदनम् ॥१८॥
वनमालासमा यस्मिन् माला खड्गे प्रदृश्यते ।
मालाङ्गमिति तद्विद्यात्तत्तोयं गन्धवद्भवेत् ॥
अत्र तप्तोदकं न्यस्तं शीतं भवति तत्क्षणात् ।
एष दाहपरीतानामन्ते पित्तदहातुराम् ॥
भवेत् परमनैषध्यं भाग्यैनैतद्धि लभ्यते ॥१९॥
यदा नीरकसङ्काशमङ्गं भूमिः सितासिता ॥
एतन्नीरकवज्रं स्यात्तत्स्पृष्टे तत्क्षणाज्ज्वरः ॥२०॥
भूमिः सितासितश्रेष्ठा अङ्गं भृङ्गाभमिष्यते ॥
तत्र नेत्रमध्यमन्यस्तं शैत्यमाप्नोति केवलम् ।
एतद्भ्रमरवज्रं स्यात्तत्स्पृष्टे स्याद्विसूचिका ॥२१॥
ऊर्द्धगं कपिलाभासमङ्गं यस्मिन् प्रतीयते ।
ऊर्द्धवज्रमिदं प्राहुर्विपवेगनिसूदनम् ॥"
लौहप्रदीपेऽपि ।
"ऊर्द्धगं कपिलाभासमङ्गं यस्मिन् प्रतीयते ।
चाङ्गलाङ्गन्तु तद्विद्यात् स्पर्शे तस्याहिनाशनम् ॥
२२ ॥
अङ्गं मरीचसङ्काशं भवेद्भूमिः सितेतरा ।
मरीचाङ्गमिदं वज्रं तत्स्पृष्टे कटुरक्तता ॥
तत्प्रक्षालनतोयेन नश्यन्ति पीनसादयः ॥२३॥
यदा सर्पफणाकारमङ्गं भूमिस्तु निर्मला ॥
भुजङ्गवज्रं तद्विद्यात्तत्स्पृष्टे विषवद्व्यथा ।
तस्य स्पर्शनमात्रेण भेकः प्राणैर्विमुच्यते ॥
एकस्यास्य प्रसादेन कृत्स्नां शास्ति महीं नृपः ।
२४ ।
यदाश्वखुरसङ्काशमङ्गं भूमिस्तु निर्मला ॥
अश्वाङ्गमिति तं विद्यात् खड्गं परमदुर्लभम् ।
तस्य संयोगमात्रेण वाजी मन्दोऽपि धावति ॥
तस्य क्षालनतोयेन हयानां रोगनाशनम् ।
एतत्स्पृष्टे भृशं मूर्च्छा दाहश्च भ्रम एव च ॥२५॥
मयूरपिच्छसदृशमङ्गं भूमिः सितेतरा ।
बर्हाङ्गमिति तं विद्यात्तत्स्पृष्टे वान्तिरिष्यते ॥
सर्वाङ्गामिव सर्वेषामश्व सर्वाविच्युता ।
एतदेव नृपतिभिर्भाग्यैः कुत्रापि लभ्यते ॥२६॥

भूमिरञ्जनसङ्काशा धारा चास्य सिता भवेत् ।
अञ्जनाख्यमिदं प्रायः सर्व्वदेवोपलभ्यते ॥”
लौहप्रदीपेऽपि ।
“धारा शुभ्रा भवेद्यस्य भूमिः कज्जलसन्निभा ।
कृष्णारङ्गेश्चितं वापि विद्यात् कज्जलवर्च्चकम् ॥२७॥
मधुवर्णसमा भूमिरङ्गं वा मधुबिन्दुवत् ।
चौद्राख्यमिति जानीयात् जयलक्ष्मीयशःप्रदम् ॥”
शार्ङ्गधरेऽपि ।
“स्निग्धकच्चो भवेद्यत्र रात्रिन्दिवविलेपितः ।
मधुरो मधुवर्णाभः स खड्गो देववल्लभः ॥
विशेषाच्चात्र रज्यन्ति सततं मक्षिकादयः ।२८।
आसीमकोणिका यस्य क्षुद्राङ्गं कुड्मलीकृतम् ॥
क्षुरवर्च्चकनामानं प्राह नागार्ज्जुनो मुनिः ।
इदं कुड्मलवर्च्च प्राह लौहार्णवे मुनिः ॥
अस्य चातीव बलवान् दाहः समवलोकितः ।२९।
यदङ्गं मक्षिकाकारं भूमिश्चैव सितासिता ॥
स्नेहः शुष्यति चैवाच्च मक्षिकाङ्गं समादिशेत् ।३०।
अङ्गं यदा तुषाकारं या च भूमिः सितासिता ॥
तुषवर्च्चमिदं ख्यातं प्राह नागार्ज्जुनो मुनिः ।३१।
अङ्गं यवफलाकारं भूमिः कृष्णा सिता तथा ॥
यवाङ्गमिति तं विद्यात्तत्स्पर्शं कण्डूसम्भवः ।
एष खड्गाधमस्त्याज्यो यदीच्छेद्धितमात्मनः ॥३२
अङ्गं व्रीहिप्रसूनाभं भूमिर्धूम्रा चतोऽतिरुक् ।
तद्व्रीहिवर्च्चं जानीयाच्छत्रूणां भयवर्द्धनम् ३३ ॥
अतसीफलसङ्काशमङ्गं भूमिः सितासिता ।
अतसीवर्च्चमाहुस्तं तत्स्पर्शे शिरसो रुजा ३४ ॥
यदा सर्षपबीजाभमङ्गं भूमिः सितासिता ।
खरधारः खरस्पर्शः सर्षपाङ्गः स दुर्लभः ॥३५॥
सिंह्याकारं भवेद्यस्य अङ्गं भूमिः सितासिता ।
सिंहीवर्च्चन्तु तद्विद्यात्तत्स्पर्शे प्रलपेन्नरः ॥
एतत्क्षालनतोयेन कासरोगोपनाशनम् ॥३६॥
अङ्गं तण्डुलसङ्काशं भूमिर्धूम्रा सितासिता ।
तण्डुलाङ्गमिमं विद्याद्यशःश्रीबलवर्द्धनम् ।
एतत्पर्य्युषितं तोयं तण्डुलोदकसन्निभम् ॥
अस्य प्रभावात्मनुजो भर्त्तुर्हि लभते श्रियम् ॥३७
अङ्गचैत्रोत्सुराकारं भूमिराघातनिःसहा ॥
खड्गाधममिदं विद्याच्चैत्रवर्च्चं नाम नामतः ॥३८॥
स्थूला दीर्घाः शिराः कृष्णा भूमिश्चैव सिता-
सिता ॥
शिराङ्गमिति तं ब्रूयादेनं खड्गाधमं बुधाः ।३९।
शिवलिङ्गाकृतिश्चाङ्गे धारा चैव सिताथवा ॥
शिवाङ्गमिति तं ब्रूयाच्छत्रुपक्षनिसूदनम् ॥४०॥
यदा व्याघ्रनखाकारमङ्गं भूमिस्तु पिङ्गला ॥
नखवर्च्चमिदं ब्रूयात्तत्स्पर्शे श्वयथुर्भवेत् ।
एतद्दामिषसंस्पर्शात् प्रविशेत स्वयमेव हि ॥४१॥
ग्राहपुच्छोपमन्त्वङ्गं भूमिर्धूम्रा खराकृतिः ।
ग्राहाङ्गमिति जानीयाच्छत्रुवंशोपनाशनम् ॥
अस्य स्पर्शनमात्रेण जीवन्मत्स्या जडत्वकम् ॥४२॥
यदा मत्तगजेन्द्राभमङ्गं भूमिः सितासिता ॥
गजाङ्गमिति जानीयात् संग्रामे विजयप्रदम् ।
एतत्क्षालनतोयेन गजमत्तोऽपि शाम्यति ॥४३॥
अङ्गं केशसमं यस्य भूमिर्धूम्रा सितासिता ।
केशाङ्गमिति जानीयात् सोढृःखभयापहम् ॥४४॥
निरङ्गं स्थूलप्रकृतिमुपशाङ्गं विदुर्बुधाः ।
एतद्धि प्रायशो लोके दृश्यते द्विजसत्तम ! ॥”४५
पद्मपुराणस्य ।
“निरङ्गा निशिता धारा शाणे वह्निं वमत्यपि ।
द्रोणीवर्च्चमिदं ज्ञेयं पृथिव्यां नातिदुर्लभम् ॥४६॥
अङ्गं काकपदाकारं भूमिराघातनिःसहा ।
एष खड्गाधमस्त्याज्यो काकाङ्गो भूति-
मिच्छता ॥४७॥
यदा कपालमङ्गेषु दृश्यते सर्पेतः खरम् ।
एतद्धि दुःखजनकं कपालाङ्गं बुधस्त्यजेत् ॥४८॥
तन्वीपत्रा बलाका या सुवर्णाङ्गासिपुत्त्रिका ।
पत्रवर्च्चकमाहुस्तं आयुर्व्वेदविदो जनाः ॥”
लौहार्णवेऽपि ।
“सुपर्णसन्निभा भूमिरङ्गं कालं प्रतीयते ।
तत् पत्रवर्च्चं काकस्य सुपर्णमुपजायते ॥४९॥
तुवरीदलसङ्काशमङ्गं यस्मिन् प्रतीयते ।
तुवरीवर्च्चमाहुस्तं तत्स्पर्शे शिरसो भ्रमः ॥
एष खड्गाधमस्त्याज्यो यदीच्छेज्जीवनं निजम् ॥
५० ॥
विम्बीदलसमा भूमिरङ्गं विम्बीफलोपमम् ॥
विम्बीवर्च्चन्तु तद्विद्यात्तज्जलं तिक्तमुच्यते ।
पित्तश्लेष्मविकाराणां प्रशमाय प्रयुज्यते ॥५१॥
प्रियङ्गुसदृशन्त्वङ्गं भूमिश्च कपिलाकृतिः ।
फलवर्च्चमिदं प्रोक्तं शाणे धूम्रं वमत्यपि ॥५२॥
अङ्गं सर्षपपुष्पाभं भूमिश्चैव सितासिता ।
एतत् सर्षपवर्च्चं स्यात् शाणे वह्निं वमत्यपि ॥
अपि कुण्डलिका याति एतदत्यन्तकोमलम् ।
एतत्प्रसादात् क्षितिपः कृत्स्नां साधयते महीम् ॥
५३ ॥
नीलीरससमा भूमिरङ्गं नीलीतरङ्गवत् ।
नीलीवर्च्चमिदं दृष्टं शाणे वह्निशिखां वमेत् ॥
एष खड्गवरो नृणामरिष्टभयनाशनः ॥५४॥
रक्तासितो महारेखा भूमिश्चैव सितासिता ॥
रक्ताङ्गमिति जानीयाद्वैरिपक्षविनाशनम् ।
शाणेन यस्तु रक्तां वा नीलां वा वमते शिखाम् ॥
रक्तस्पर्शनमात्रेण स्वयमेव निकृन्तति ।
चतोऽस्य रक्तश्वयथुस्तृषा दाहश्च जायते ॥५५॥
अङ्गं वचादलसमं भूमिश्चैव सितासिता ।
वचावर्च्चमिदं ज्ञेयं तत्स्पर्शाद्विषनाशनम् ॥
एष खड्गवरो राज्ञा साधनीयः प्रयत्नतः ॥५६॥
रसोनादसमं त्वङ्गं भूमिस्तस्य दलोपमा ॥
रसोनवर्च्चं जानीयात् शाणे वह्निं वमत्यपि ।
अस्य धावनतोयेन आमवातविनाशनम् ॥५७॥
निरङ्गा निर्म्मला भूमिर्धारा तीक्ष्णा खरः स्वरः ।
सुमनावर्च्चमेतत् स्याद्भुवि नात्यन्तदुर्लभम् ॥५८॥
मञ्जिष्ठासदृशा दीर्घास्तिन्वशो रेखाः सुविस्तराः ।
जिङ्गीवर्च्चमिदं नाम सर्व्वकामार्थसाधनम् ॥५९॥
अङ्गं शमीपत्रसमं भूमिर्धूम्रा सितासिता ।
शमीवर्च्चमिदं ज्ञेयं रणे चरसुदावहम् ॥
शाणेषु वमते वह्निं सहते वह्निपीडनम् ॥६०॥
रोहितवल्कलसदृशमङ्गं भूमिः सितासितावापि ।
धूम्रा गम्भीरस्वरयुक्तं धारा तीक्ष्णा सिता
भवेद्रेखा
रोहिताख्यमिदं वर्च्चं सर्व्वारिष्टविनाशनम् ।
वह्निसंस्पर्शमात्रेण किञ्चिच्चिमिचिमायते ।
इत्ययं दुर्लभः खड्गो देवानामपि कथ्यते ॥६
शफरीवल्कलाकारमङ्गं भूमिः सितासिता ।
शोष्ठीवर्च्चमिदं प्रोक्तं न्यस्तं तरति वारिणि ॥
एष खड्गोत्तमो राज्ञां विपक्षकुलनाशकः ।
कदाचिल्लभ्यते भाग्यैर्लभ्यते लभ्यते मही ॥६२
अङ्गं मारिषपत्राभं भूमिः स्याद्विषमच्छविः ।
इत्ययं मारिषाङ्गः स्यात् पृथिव्यां नातिदुर्लभः
६३
भृङ्गराजस्य पुष्पाभमङ्गं भूमिर्द्दन्तप्रभा ।
आघातं सहते नैव एष खड्गाधमो मतः ॥६४
धारा तीक्ष्णा खुराकारा भूमिरङ्गविवर्ज्जिता
आघातं सहते घोरं शाणे वह्निं वमत्यपि ।
खुराङ्गमिति जानीयात् पृथिव्यां नातिदुर्ल-
भम् ॥६५॥
निर्मला समला भूमिर्भवेच्चैव कदा कदा ।
मन्दा तीव्रा भवेद्धारा तड्डिद्वर्च्चस्य लक्षणम् ॥६
नीलाञ्जनसमा भूमिरङ्गं जलतरङ्गवत् ।
मेघाङ्गमिति जानीयाच्छाणे शीतं भवत्यपि ॥
एष खड्गाधमस्त्याज्यो यदीच्छेद्भूतिमात्मनः ।
भर्त्तुः प्रतापं शमयेद्रविबिम्बं यथा घनः ॥६७।
मन्दा धारा भृशं गाढ़ा भूमिरङ्गविवर्ज्जिता
पर्व्वताङ्गमिदं नाम सर्व्वत्रैवोपलभ्यते ॥६८॥
अङ्गं गुञ्जाफलसमं भूमिर्म्मीनदलोपमा ।
गुञ्जावर्च्चमिदं पृष्ठं तप्तं भवति घर्षणे ॥
शाणे सिन्दूरसङ्काशं रजो वमति चासकृत् ।
एष खड्गवरो राज्ञा भाग्यादेवोपयुज्यते ॥
अस्य प्रभावात्तन्नास्ति यन्न साधयते नृपः ॥६९
अङ्गं मतुशराकारं भूमिश्चैव सितासिता ।
धारा तीक्ष्णा वमति च शाणे वह्निसमाः
शिखाः ।
शरवर्च्चमिदं ज्ञेयं राज्ञां वाञ्छितसिद्धये ॥७०।
दूर्व्वादलनिभा भूमिर्धारा तीक्ष्णा खरः स्वरः
शाणेन वमते वह्निं दूर्व्वावर्च्चं सुदुर्लभम् ॥७१॥
अङ्गं विल्वदलाकारं भूमिश्चैव सितासिता ।
विल्ववर्च्चमिदं शाणे नीलपीते वमेच्छिखे ॥
एष खड्गवरः प्रोक्तः शत्रूणां कुलनाशनः ॥७२
मसूरदलसङ्काशा भूमिरङ्गं मसूरवत् ।
मसूराङ्गमिदं शाणे रजो वमति चारुणम् ॥७३
शोणपुष्पनिभा रेखा दीर्घा भूमिः सितेतरा ।
शोणाङ्गमिति जानीयात् खड्गं परमदुर्ल-
भम् ॥७४॥
शटीदलसमा भूमिरङ्गं तत्कुसुमोपमम् ।
शटीवर्च्चमिदं प्रायो लभ्यते गुणवत्तरम् ॥७५॥
मार्ज्जाररोमसदृशमङ्गं भूमिः सितेतरा ।
मार्ज्जाराङ्गमिदं नाम्ना रोगशोकभयावहम् ।
एष खड्गाधमस्त्याज्यो यदीच्छेद्भूतिमात्मनः ।
॥ ७६ ॥
केतकीपत्रसदृशमङ्गं यस्मिन् प्रतीयते ।

विज्ञात् केतकवज्रं तत् वाराहविषसमुद्भवम् ॥"७७
लौहप्रदीपस्य ।
"अङ्गं मूत्रातसुनिभं भूमिर्मूर्वादलच्छविः ।
शाणेन वमते शुक्लां शिखां मौर्वीं भवेत्ततः ॥
मौर्व्वाङ्गमिदमुत्कृष्टं यशःकीर्त्तिबलावहम् ॥७८॥
लिङ्गं तीक्ष्णं खरं गाढ़ं शाणे वह्निं वमेत् कणम् ॥
छिन्नतास्यविधं लौहं वचाङ्गमिति तद्वदेत् ॥७९॥
कलायपुष्पसदृशमङ्गं भूमिः सितासिता ।
कलायवज्रं जानीयात् तत्क्षते पाकः इष्यते ॥८०॥
अङ्गं चम्पकपुष्पाभं भूमिः कृष्णा तथा सिता ।
शिखां शाणे वमेच्छीतं तिक्तं तस्य जलं भवेत् ।
इदं चम्पकवज्रं स्यात् सर्व्वत्र विजयप्रदम् ॥८१॥
अङ्गं बलादलसमं भूमिः शुक्ला तथेतरा ।
बलावज्रमिदं ज्ञेयं नागाभावं भवेद्दृतम् ॥
इत्ययं बालरोगाणां नाशने परमौषधम् ॥८२॥
अङ्गं वटारोहसमं भूमिर्व्वटदलच्छविः ।
वटवज्रमिदं ज्ञेयं खरं खड्गाधमं बुधैः ।
एतस्य स्पर्शमात्रेण नरो मुच्येत सम्पदा ॥८३॥
वंशनीलीसमा भूमिः खरधारा सिताकृतिः ।
वंशाङ्गमिति जानीयाद्वंशवृद्धिकरं परम् ॥८४॥
भूमिः शालदलाकारा अङ्गं लघु सितासितम् ।
शालाङ्ग एष खड्गः स्यात् पूज्यः सर्व्वार्थदायकः ।
अयं शाणे वमेद्वह्निं धारा चाप्यथवा भवेत ॥८५॥
भूमिः सितासिता वापि अङ्गं ज्येष्ठीसमं लघु ।
ज्येष्ठीवज्रमिदं निन्द्यं न स्पृश्यं वा हितेच्छुभिः ॥
८६ ॥
पुराणजालसदृशमङ्गं भूमिः सितासिता ॥
जालवज्रमिदं पूज्यं शत्रुसम्पत्तिनाशनम् ।
यदि शाणे वमेन्नीलां शिखां वह्निं वमेच्च वा ॥
सदैव दुर्लभः खड्गो नान्यथा भयहेतुकः ॥८७॥
अङ्गं पिपीलिकाकारं भूमिर्धूम्रा तथासिता ॥
पिपीलिकाङ्ग इत्येष तत्क्षते कण्डुसम्भवः ।
स्वयं यदि भवेद्भग्नः शाणे पूज्यतमस्तदा ॥८८॥
नलपत्रसमा भूमिरङ्गमुन्नतकुसुमोपमम् ।
नलाङ्गमिति जानीयाद्भर्त्तुः सर्व्वार्थसाधकः ॥
८९ ॥
निरङ्गा निर्म्मला भूमिर्घृष्टं दृष्टं वमेज्जलः ।
दृढ़ा धारा भृशं स्थूला आघातं सहते न च ॥
रत्नौवज्रमिदं निन्द्यं शत्रूणां विजयावहम् ॥९०॥
कुष्माण्डबीजसदृशमङ्गं भूमिः सितासिता ॥
कुष्माण्डवज्रं जानीयात्तत्क्षते वेगनिग्रहः ॥९१॥
अङ्गं वृरोमसदृशं भूमिर्धूम्रा सितासिता ।
रोमाङ्गमिति जानीयात्तत्क्षते पिड़कोद्गमः ॥९२॥
भूमिः कुष्ठीदलसमा अङ्गं तत्कण्टकोपमम् ॥
धारा तीक्ष्णा स्वरस्तीक्ष्णो लघुमानं खरा स्पृशा ।
सुधाङ्कः खड्ग इत्येष तत्क्षते दाहहृद्भ्रमाः ॥
सुखाभिकर्णनाशानां दाहः पाकश्च जायते ।
अयं यदि च सर्पाणां फणास्पूपरि विध्यते ॥
फणाविदारमाप्नोति सर्पो लोटयते शिरः ।
अस्य धावनतोयेन कुष्ठरोगविनाशनम् ॥९३॥
कर्कन्धुदलपृष्ठाभा भूमिरङ्गन्तु तत्समम् ।
कर्कन्धुकं जानीयात्तत्क्षते दाहनाशनम् ॥
एष खड्गाधमस्त्याज्यो चेतथा यदि विद्विषः ॥
९४ ॥
रक्तं बकुलपुष्पाभं भूमिस्तत्फलसन्निभा ॥
बकुलाङ्गमिदं पूज्यं शाणे सुरभिगन्धवत् ।
तन्नास्ति जगतीमध्ये यदनेन न साध्यते ॥९५॥
अङ्गं संमिश्रितं यस्मिन् किञ्चिद्रक्तमीक्ष्यते ।
सर्व्वेषां दर्शनं वापि तीक्ष्णधारः खरस्वरः ॥
एष काञ्चिकवज्रः स्याद्यत्नादेवोपलभ्यते ।
नैनं प्राप्यापि वर्द्धन्ते शोधाश्चिन्नादयोऽपि च ॥
९६ ॥
भूमिः कृष्णा निरङ्गा चेद्धारा तीक्ष्णा दृढ़ापि च ।
आघातं सहते घोरं रक्तं स्पर्शेन यो विशेत् ॥
शाणेन वह्निं वमति ध्रुवं वाप्यतिघर्षणात् ।
महिषाङ्गः स वै खड्गः पृथिव्यां नातिदुर्लभः ॥
९७ ॥
अत्यन्तनिर्म्मला भूमिः शरीरं प्रतिबिम्बितम् ।
धारा तीक्ष्णा स्वरस्तीक्ष्णः स्वच्छाङ्गं तद्विनि-
र्द्दिशेत् ॥९८॥
तस्मिन् यदा भवेद्रेखा ऊर्द्ध्वा कल्याणकं तदा ॥९९
अस्मिन्नपि भवेद्वक्रा रेखा वक्राभिधन्तु तत् ॥१००॥
एतत्त्रितयमुद्दिष्टं खड्गानां प्रवरं बुधैः ।
प्रायशो लभ्यते लोके यदि सर्व्वगुणावहम् ॥
इतीदं निखिलं प्रोक्तं वज्राणां लक्षणं मया ।
प्रयत्नेर्लिखितं ह्यत्र सर्व्वेषां हितकाम्यया ॥
इतः परन्तु लौहानां लक्षणं यत्र लभ्यते ।
तस्य हासं भवाम्येव प्रतिज्ञेति कृता मया ॥
द्विलिङ्गमिश्रमालोक्य मिश्राङ्गमिति निर्द्दिशेत् ।
सर्व्वेषामङ्गमालोक्य सर्व्वाङ्गमिति निर्द्दिशेत् ॥"
इति खड्गपरीक्षायामङ्गाध्यायो द्वितीयः ॥*॥
खड्गस्य रूपाणि यथा,—
"नीलीकलायकुसुमच्छविसन्निभाभा
या चन्द्रनीलमणिकाचमणिप्रभा च ।
भूमिश्च या मरकतप्रतिमावभासा
खड्गस्य नीलमिति रूपमिदं वदन्ति ॥
तत्र चेन्निन्दितान्यङ्गान्यरिष्टानि बहून्यपि ।
दृश्यन्ते बहुदोषापि तथापि गुणवत्तरम् ॥१॥
या कालकाम्बुदमसीरसकालसर्प-
शृङ्गान्धकारकचभारसमा विभाति ।
भूमिश्च या भ्रमरबन्धुसमावभासा
खड्गस्य कृष्णमिति रूपमिदं वदन्ति ॥
अत्र नेत्राणि सम्पत्तौ अरिष्टान्यशुभानि च ।
साधारणमिदं रूपं प्राह नागार्ज्जुनो मुनिः ॥२॥
या शारदीयनवभेकसमानवर्णा
गोमेदरत्नसदृशापि च यस्य भूमिः ।
खड्गस्य पिङ्गमिति रूपमिदं वदन्ति
भर्त्तुर्य्यशोबलधनक्षयकारणाय ॥३॥
या मन्दधूमसदृशा च शिरीषपुष्प-
तुल्या विभाति मलिनापि च खड्गभूमिः ।
नागार्ज्जुनो वदति धूम्रमिदं हि रूपं
भर्त्तुर्य्यशोबलधनावलिवर्द्धनाय ॥४॥
द्विरूपं मिश्रितं कृत्वा शङ्करं प्रवदेद्बुधः ।
त्रिभी रूपैः समेतन्तु खड्गं त्रिपुरसञ्ज्ञितम् ॥
रूपैश्चतुर्भिः संयुक्तं चतुरं खड्गमुत्तरम् ॥"
इति लौहार्णवस्य खड्गपरीक्षायां वर्णा-
ध्यायस्तृतीयः ॥ * ॥
"जातिश्चतुर्व्विधा प्रोक्ता खड्गानां या पुरा मया ।
सम्प्रत्यपि प्रयत्नेन तासां लक्षणमुच्यते ॥
शुद्धाङ्गः शुद्धवर्णश्च सुनेत्रः सुस्वरश्च यः ।
मृदुस्पर्शः सुसन्धिस्तीक्ष्णधारो महागुणः ॥
खड्गं ब्राह्मणजातिं तं प्राह नागार्ज्जुनो मुनिः ।
अस्य क्षते भवेच्छोथो घोरः सर्व्वाङ्गगोचरः ॥
मूर्च्छा पिपासा दाहश्च ज्वरो मृत्युश्च जायते ।
अदृष्टं निपतत्कक्षमहोरात्रिन्द्विपोषितम् ।
मलिनत्वं न सम्वत्ते निर्म्मलं कुरुते परम् ।
तरुणादित्यकिरणस्पर्शादेव हृदि स्थितः ॥
दर्शनात् सर्व्वं न तु कारं पुरुषस्य हि धारिणः ।
गायत्र्युच्चारमात्रेण खरतां व्रजति स्फुटम् ॥
एष खड्गवरः सर्व्वमरिष्टं नाशयेद्ध्रुवम् ।
अस्य प्रसादात् पुरुषस्त्रिलोकमपि साधयेत् ॥
तस्मादेव मनुष्याणां सुलभो न हि भूतले ।
दृश्यन्ते प्रायशः स्वर्गे कुशद्वीपे हिमालये ॥१॥
धूम्रवर्णं महासारं तीक्ष्णधारं खरस्वरम् ।
सर्व्वाघातसहं सर्व्वनेत्रवर्णस्वराकरम् ॥
खड्गं क्षत्रियजातिं तं जानीयात् खड्गकोविदः ।
अस्य क्षते भवेद्दाहस्तृष्णानाशो ज्वरो भ्रमः ॥
मृत्युश्च जायते प्राणी वमेद्वह्निकणान् बहून् ।
संस्कारे चाप्यसंस्कारे नैर्म्मल्यं नास्य लक्ष्यते ॥
शाणेऽप्यशाणे खरता मृदुत्वं चात्यन्ततीक्ष्णता ।
रक्तस्पर्शनमात्रेण विशेदन्तरमन्तरम् ॥
अयं खड्गवरः पुण्यो मनुष्यैरपि लभ्यते ॥२॥
नीलवर्णः कृष्णवर्णः संस्कारे निर्म्मलो भवेत् ॥
शाणेन खरता चास्य धारस्तुल्यं निशम्यति ।
वैश्यजातिरयं खड्गः क्षते खड्गात्रदर्शनम् ॥
नात्युत्कृष्टो नातिहीनः सर्व्वत्रैवोपलभ्यते ॥३॥
मलमालीमसप्रकाशः स्थूलधारो मृदुस्वरः ॥
संस्कारे नैव मलिनः शाणे चापि खरेतरः ।
शूद्रजातिरयं खड्गः क्षते नास्त्यपि वेदना ॥
दूरादेषोऽधमस्त्याज्यो यदीच्छेद्धितमात्मनः ।
प्रायशः सर्व्वलोकेषु स्वयमेवोपदृश्यते ॥४॥
द्वयोर्लक्षणमालोक्य जारजं खड्गमादिशेत् ।
त्रयाणां लक्षणैरेव त्रिजातिं खड्गमादिशेत् ।
चतुर्णां लक्षणैरेव जातिसङ्करमुच्यते ॥"
इति लौहार्णवस्य खड्गपरीक्षायां जात्य-
ध्यायः ॥ * ॥
अथ त्रिंशन्नेत्राणां लक्षणानि ।
"चक्राकारं यदा नेत्रं खड्गस्याङ्गे प्रदृश्यते ।
तं चक्रनेत्रं जानीयात् भर्त्तुः सर्व्वार्थसाधनम् ॥
जानन्नेकेन खड्गेन कृत्स्नां साधयति महीम् ॥१॥
प्रफुल्लपद्मसङ्काशं नेत्रं पद्मदलोपमम् ॥
यदि वा दृश्यते खड्गे पद्मनेत्रं समादिशेत् ।
अयं खड्गवरो यत्र तत्रैव कमलालया ॥२॥
ऊर्द्ध्वा स्थूला यदा रेखा गदाकारा प्रतीयते ।
गदानेत्रमिदं विद्धि सर्व्वशत्रुनिसूदनम् ॥३॥
शङ्खाकारं यदा नेत्रं खड्गमध्येऽभिदृश्यते ।

शङ्खनेत्रमिदं सर्व्वदेवानामपि दुर्लभम् ॥४॥
कमलप्रतिमं नेत्रं यस्य भूमौ प्रतीयते ।
सर्व्वार्थसाधकं खड्गं तं विद्याद्विजयप्रदम् ॥५॥
धनुःस्वरूपं यन्नेत्रं धनुर्नेत्रमुशन्ति तम् ।
तस्य स्पर्शनमात्रेण मन्त्रोऽपि प्रमुखायते ॥
अयं निशीथे विजने खड्गो भनभनायते ॥६॥
यन्नेत्रमङ्कुशाकारं तंविद्याद्गुणवत्तरम् ॥
खड्गमङ्कुशनेत्राख्यं भर्त्तुः सर्व्वार्थसाधकम् ।
अलक्ष्मीपापरक्षोघ्नं अल्पायुर्निवारणम् ॥८॥
छत्राकारं यदा नेत्रं छत्रनेत्रं वदन्ति तम् ।
अस्य प्रभावात् क्षीणोऽपि सार्व्वभौमो भवेन्नृपः॥
दीनोऽपि च सुखी भूयात् सुखी भूयान्महेश्वरः ।
महेश्वरोऽपि सचिवः सचिवो मण्डलेश्वरः ॥
मण्डलेशश्चक्रवर्त्ती भवेदत्र न संशयः ॥८॥
पताकाकृतिनेत्रञ्चेत् सर्व्वसम्पत्तिकारकम् ॥
पताकानेत्रमाख्यातं संग्रामे विजयप्रदम् ॥९॥
नेत्रं वीणाकृति यदा वीणानेत्रमुशन्ति तम् ।
निशीथे विजने खड्गो वीणावत् स्वनमावहेत् ।
अस्य प्रभावात् सर्व्वेशा अपि वश्या भवन्ति
हि ॥१०॥
मत्स्याकृति यदा नेत्रं मत्स्यनेत्रमिमं विदुः ।
अस्य प्रभावात् क्षितिपः कृत्स्नां साधयते
महीम् ॥११॥
शिवलिङ्गसमं नेत्रं लिङ्गनेत्रमिमं विदुः ।
भर्त्तुः सर्व्वार्थसंसिद्ध्यै शत्रूणां नाशनाय च ॥
वामपार्श्वे तु यात्रायां धर्त्तव्योऽयं तथा रणे१२।
अत्र ध्वजाङ्कुशचक्रकलसानां लक्षणानि पतितानि । १३ । १४ । १५ ।
शूलाकृति यदा नेत्रं शूलनेत्रं वदन्ति तम् ।
सर्व्वार्थसाधकः सर्व्वारिष्टानिष्टप्रणाशनः ॥१६॥
शार्दूलनेत्रं तं विद्यात् शार्दूलाकृतिनेत्रतः ।
शत्रुश्रेणीविनाशाय संग्रामे विजयाय च ॥१७॥
सिंहाकृति यदा नेत्रं सिंहनेत्रमिमं विदुः ।
अस्य प्रभावात् क्षीणोऽपि कृत्स्नां साधयते
महीम् ॥१८॥
तत् सिंहासननेत्रं स्यात् नेत्रे सिंहासनोपमे ।
अस्य प्रभावात् क्षितिपः कृत्स्नां साधयते
महीम् ॥१९॥
गजाकृति यदा नेत्रं गजनेत्रं वदन्ति तम् ॥
अस्य प्रभावात् क्षीणोऽपि लभते राजसम्पदम् ॥
२० ॥
नेत्रं हंसाकृति यदा हंसनेत्रं वदन्ति तम् ।
अस्य प्रभावात् भूपालो यशः प्राप्नोत्यनुत्तमम् ॥
२१ ॥
मयूराकृतिनेत्रं द तन्नेत्रमिति निर्द्दिशेत् ॥
अस्य प्रभावान्मनुजः सर्पदर्पान्निकृन्तयेत् ॥२२॥
जिह्वाकारं यदा नेत्रं जिह्वानेत्रं वदन्ति च ॥
संग्रामखर्परेष्वेवं पिवेद्वैरिशिरोरजः ॥२३॥
दन्ताकारं यदा नेत्रं दन्तनेत्रं वदन्ति तम् ॥
अयं रिपुगणं मर्द्दि चर्व्वयत्यतिभैरवम् ॥२४॥
खड्गाकारं यदा नेत्रं खड्गनेत्रं वदन्ति तम् ।
तस्य प्रभावान्मनुजस्त्रिलोकीं वशयेदपि ॥२५॥

मनुष्यपुत्रिकाकारा पुत्रिकानेत्रमुच्यते ॥
अयं सशैला सद्वीपां कृत्स्नां साधयेत् क्षितिम् ।
न चेयं पुत्रिका किन्तु जयलक्ष्मीरिह स्वयम् ॥
तस्मान्नायं मनुष्याणामल्पभाग्येन लभ्यते ॥२६॥
चामराकृतिनेत्रत्वात्तन्नेत्रमिति निर्द्दिशेत् ।
अस्य प्रभावाज्जायन्ते चामरोद्भवसम्पदः ॥२७॥
एकानेकशिखे शैलनेत्रे तन्नेत्रसंज्ञकम् ।
अपि राष्ट्रभये युद्धे विषमे वैरिसङ्कटे ।
स्थिरीकरोति धरणीं धरणीं पर्व्वतो यथा ॥२८॥
पुष्पमालासमं नेत्रं पुष्पनेत्रं वदन्ति तम् ।
अस्य प्रभावात्तुष्यन्ति ग्रहाः सर्व्वाश्च देवताः ॥
२९ ॥
भुजङ्गमसमे नेत्रे सर्पनेत्रमिदं मतम् ।
अयं शत्रुगणं हन्ति यथा मर्त्त्यं भुजङ्गमः॥३०॥
सवर्णं समवर्णञ्च तत् सर्व्वं द्विविधं भवेत् ।
सवर्णं शान्तिसम्पत्त्यै रिपुनाशे तथापरम् ॥
द्वयोरेकत्र एके च तत् पुनर्व्विविधं भवेत् ।
एकलोकसुखं नेदं ददाति द्विविधं द्वयोः ॥
मूलमध्याग्रसंस्थानात्तत् पुनर्द्विविधं भवेत् ।
अग्रे चाग्रफलं ज्ञेयं मध्ये मध्यफलं मतम् ॥
मूले फलं जघन्यं स्यात् प्राह नागार्ज्जुनो मुनिः ।
एकं द्वे त्रीणि नेत्राणि नात्र संख्या व्यतिक्रमः ॥
एकं धर्म्मः स्वर्गकामौ द्वे त्रीणि च त्रिवर्गकम् ।
तत्फलानि प्रयच्छन्ति प्राह नागार्ज्जुनो मुनिः ॥
द्विनेत्रमिति जानीयात् स्वसंज्ञां नेत्रयोर्द्वयोः ।
त्रिनेत्रञ्च त्रिभिर्ज्ञेयं वहुनेत्रमतः परम् ॥
यथोत्तरं गुणवहं खड्गमाहुरनुत्तमम् ।
दिङ्मात्रमिति निर्द्दिष्टं नेत्राणां शुभदायिनाम् ॥
तीव्राणां मङ्गलानाञ्च दर्शनञ्च शुभावहम् ॥”
इति खड्गपरीक्षायां नेत्राध्यायः पञ्चमः ॥*॥
“यथा नेत्रस्य संस्थानं तथारिष्टस्य लक्षयेत् ।
नेत्रेषु स्थाननियमो नारिष्टे स्थाननिर्णयः ॥
प्रशस्ताङ्गोऽपि यः खड्गोऽरिष्टेनैकेन
निन्दितः ॥”
अथ त्रिंशदरिष्टानां लक्षणानि ॥
“छिद्रवद्दृश्यते खड्गे स्वभावेन च लक्ष्यते ।
छिद्रारिष्टमिदं विद्धि भर्त्तुर्व्वीर्य्यबलापहम् ॥१॥
यदा काकपदाकारमरिष्टं दृश्यते क्वचित् ।
अयं काकपदारिष्टः सर्व्वाभीष्टविनाशनः ॥२॥
रेखाकारं यदारिष्टमूर्द्ध्वं वा तिर्य्यगेव वा ।
रेखारिष्टमिदं विद्धि भर्त्तुर्व्वीर्य्यबलापहम् ॥३॥
भिन्नभ्रान्तिकरं पापं भिन्नारिष्टमिदं विदुः ।
भर्त्तुः कुलं यशो राष्ट्रं नाहत्वा न व्रजेत्
स्वयम् ॥४॥
यदा भेकशिरोरूपमरिष्टं दृश्यते क्वचित् ।
भेकारिष्टमिदं नाम्ना संग्रामे भयदायकम् ५ ॥
अरिष्टे मूषिकाकारे मूषिकारिष्टमुच्यते ।
अयं खड्गाधमः कुर्य्यात् पत्युः पातालसङ्ग-
मम् ॥६॥
विडालनयनाकारो बिन्दुरेकोऽतिविस्तरः ।
विडालारिष्टमेतत् स्यात् भर्त्तुः सर्व्वार्थनाश-
नम् ॥७॥

अरिष्टं शर्कराकारं यदा स्पर्शेन बुध्यते ।
शर्करारिष्टमेतत् स्याद्धनबुद्धिविनाशनम् ॥८॥
यदा नीलीरसाभासमरिष्टं दृश्यते क्वचित् ।
नील्यरिष्टमिदं ज्ञेयं यशोलक्ष्मीविनाशनम् ॥९॥
अरिष्टे मशकाकारे मशकारिष्टमुच्यते ।
भर्त्तुः कुलं यशो बुद्धिं धृतिं प्रीतिञ्च नाशयेत्
१० ॥
भृङ्गप्रतिमो बिन्दुरेकोऽनेकोऽथवा यदा ।
भृङ्गारिष्ट इत्येष धृतिस्मृतिविनाशनः ॥११॥
सूचीरूपमरिष्टञ्चेदूर्द्ध्वं वा तिर्य्यगेव वा ।
सूच्यरिष्टमिदं नाम भर्त्तुः कुलविनाशनम् ॥१२।
त्रयस्त्रिन्द्वो राजन् ! पङ्क्तयो विषमेण वा ।
उपर्य्युपरि वाधोऽधस्त्रिविन्द्वाख्यमरिष्टकम् ॥
तस्य स्पर्शनमात्रेण सचेलः स्नानमाचरेत् ॥१३॥
कालिकारिष्टमित्येतद् धीधृतिस्मृतिनाशनम् ॥
१४ ॥
एकत्र यदि न स्थेष प्रयत्नेनापि संहृतः ।
दारी नाम महारिष्टं सर्व्वाभीष्टविनाशनम् ॥
अनेकगुणसम्पन्नः खड्गो कोकेन शस्यते ॥१५॥
कपोतपत्त्रप्रतिममरिष्टञ्चेत्तदाश्रयम् ।
भर्त्तुः कुलं यशो विद्यां वलं बुद्धिञ्च नाशयेत् ॥१६॥
काकाकृति यदारिष्टं काकारिष्टं तदोच्यते ।
अनेन भर्त्तुः संग्रामे भङ्ग एवोपजायते ॥१७॥
अरिष्टे खर्पराकारे खर्परारिष्टमुच्यते ।
भर्त्तुर्यशो बलं वीर्य्यं बुद्धिं प्रीतिञ्च नाशयेत् ॥१८॥
यदान्यलौहशकलं लग्नं स्यादिव लक्ष्यते ।
शकलीति स वै खड्गः सर्व्वाभीष्टनिसूदनः॥१९॥
क्रोडीकुशपत्त्रकयोर्लक्षणे पतिते २० । २१ ।
यस्मिन्निम्नमिवाभाति मध्ये वा दृश्यते क्वचित् ।
जालारिष्टमिदं नाम भर्त्तुः कुलधनापहम्॥२२॥
एकैकरेखा दीर्घाग्रा यदा पल्लविनी भवेत् ।
स्पर्शे वाथ करेणाथ करालारिष्टमुच्यते ॥
अयं हि क्षितिपालानां दृष्टियोग्यो भवेन्न हि ।
दर्शनादेव नश्यन्ति यशोलक्ष्मीजयादयः ॥२३॥
अरिष्टे कङ्कपत्राभे कङ्कारिष्टं तदुच्यते ।
अस्य स्पर्शनमात्रेण नश्यत्यायुर्यशो बलम् ॥२४॥
खर्ज्जूरदलप्रतिमं यदारिष्टन्तु लक्ष्यते ।
खर्ज्जूरारिष्टमेतत् स्याद्भर्त्तुः कुलधनापहम् ॥२५॥
गोशृङ्गाभमरिष्टञ्चेत् शृङ्गारिष्टं तदुच्यते ।
अनेन भर्त्तुर्नश्यन्ति लक्ष्मीबलकुलादयः ॥२६॥
गोपुच्छाकृति चेत् खड्गे अरिष्टं संप्रतीयते ।
पुच्छारिष्टमिदं नाम भर्त्तुः सर्व्वार्थनाशनम्॥२७॥
खनित्राभमरिष्टञ्चेत् खनित्रारिष्टमुच्यते ।
शूराणामपि संग्रामे भङ्गमेतत् प्रयच्छति ॥२८॥
अरिष्टे लाङ्गलाकारे लाङ्गलारिष्टमुच्यते ।
अयं पापात् पापतरः प्रेक्षणीयो न भूभुजा ॥
अयमायुः श्रियं हन्ति विद्यां बलमशेषतः॥२९॥
वड़िशारिष्टस्य लक्षणं पतितम् ॥३०॥
इत्यरिष्टानि प्रोक्तानि नागार्ज्जुनात् प्रयत्नतः ।
विचार्य्यैतानि मतिमान् खड्गं कोषे निधापयेत्॥
दिङ्मात्रमिदमुद्दिष्टमरिष्टानां द्विजात्मनाम् ।
अमङ्गलानां मन्दानां दर्शनञ्चाशुभावहम् ॥

अरिष्टमेकमेव स्यादिहरिष्टं शुभावहम् ।
अन्योन्यमशुभं कुर्य्याद्विषस्य हि विषं यथा ॥
एकमारभ्य सप्तान्तमरिष्टं प्राह नान्यथा ।
यथोत्तरं द्विगुणितं फलमाहुर्मनीषिणः ॥
इति खड्गपरीक्षायामरिष्टाध्यायः षष्ठः ॥६॥
अथ द्विविधा भूमिः ।
दिव्यभौमविभागेन भूमिर्या द्विविधा मता ।
दिव्या दिवि समुद्भूता भौमा भूमिसमुद्भवा ॥
तत्र लक्षणमप्येषां लिख्यते तन्निबोधत ।
देवदानवयोर्मध्ये खड्गश्छिरभूत् पुरा ॥
ते खड्गाः पुण्यदेशेषु केषु केषु प्रतिष्ठिताः ॥
दिव्यलक्षणं यथा,—
ये खड्गाः स्थूलधारा भृशमतिलघवो निर्म्म-
लाङ्गाः सुनेत्रा
ये दिव्याभासरूपाः सुविमलगगनच्छायसंस्कार-
योगात् ।
दुर्भेद्या दुर्घटाश्च ध्वनिगुणगुरवो यत्पते दाह-
पाकौ
ते दिव्याः कुर्व्वतेऽमी कुलधनविजयश्रीयशो-
वृद्धिमाशु ॥१॥
अथ भौमलक्षणं हृष्टहारीते ।
पूर्व्वं महेशेन विषाणि यानि
भुक्तानि तेषां पतितास्तु बिन्दवः ।
यस्मिन् प्रदेशे स स एव देशः
कालायसानामाकरतां जगाम ॥
पुरामृतं क्षीरसमुद्रमध्या-
दुत्पाद्य संगृह्य ययुः सुरेन्द्राः ।
तद्बिन्दवो यत्र निपेतुरेष
शुद्धायसानामाकरतां जगाम ॥
ये विषोत्था भृशश्यामाः खराङ्गाः सम्भवन्ति हि ।
मूर्च्छादाहज्वरश्वासहृच्छोकहिक्कावमीकराः ॥
येऽमृतोत्थाः कर्वुराङ्गा मन्दाङ्गाः संभवन्ति च ।
वलीपलितमालिन्यजराव्याधिविनाशनाः ॥
अत्रैव पतितं यत्तु तत्तदाकरताङ्गताः ॥
तद्यथा,—
वाराणसीमगधसिंहलभूमिभागे
नेपालभूमिषु तथाङ्गमहीप्रदेशे ।
सौराष्ट्रकेऽन्यतरधन्यमहीविभागे
शुद्धायसां क्षितिवराः प्रवदन्ति जन्म ॥
तद्यथा,—
वाराणसेयाः सुस्निग्धास्तीक्ष्णधाराः सदङ्गिनः ।
लघवः सुखसन्धेया ज्ञेयाश्चाभेद्यशालिनः ॥
मागधाः कर्कशाः स्थूलधारा गाढतराङ्गिनः ।
गुरवो दुःखसन्धेयाः खड्गा ज्ञेया विचक्षणैः ॥
नेपालदेशप्रभवा निरङ्गा निश्चलाश्च ये ।
ज्ञेयाः सदङ्गा मलिना लघवः स्थूलधारिणः ॥
कालिङ्गा गुरवः स्वच्छा व्यक्ताङ्गास्तनुहेतवः ।
सौराष्ट्रा निर्म्मलाः स्निग्धाः सुव्यक्ताङ्गा भृशं
खराः ॥
सिंहलद्वीपजातानां चतुर्द्धा भेद उच्यते ।
केचित् सदङ्गा गुरवः कर्कशाः स्निग्धधारिणः ॥
केचित् सदङ्गा लघवः सुस्निग्धा स्थूलधारिणः ।
एषां रूपेण निर्भेद्या ज्ञेया हि द्विजसत्तमः ॥
सामान्यात् द्विगुणश्चौड्रं कालिदेशगुणस्ततः ।
कखेः शतगुणं भद्रं भद्राद्वज्रं सहस्रधा ।
वज्रात् षष्टिगुणः पाण्डिर्निरविंशभिर्गुणैः ।
ततः कोटिसहस्रेण ह्ययस्कान्तः प्रशस्यते ॥”
इत्यादिकं रसायनौपयौगिकमेव न तु खड्गे
दृष्टफलम् ॥ यदाह ।
आसान्तु लौहजातीनां वज्रं खड्गाय युज्यते ।
तथाच ।
ये खड्गास्तीक्ष्णधारा भृशमतिगुरवः षड्-
गुणाढ्याः सुभेद्याः
केचित् साङ्गा निरङ्गाः कति च न समला
निर्म्मलाः केचिदेव ।
ते भौमाः कुर्व्वतेऽमी धनविजयबलं षड्गुणा
निर्गुणा वा
ते दुःखं शोकमुग्रं ददति बलकुलश्रीयशोनाश-
कास्ते ॥
इति खड्गपरीक्षायां भूम्यध्यायः सप्तमः ॥७॥
अथाष्टधा ध्वनिः ।
ध्वनिरष्टविधः प्रोक्तो यः पूर्व्वं सूत्रसंग्रहे ।
तेषामपि लिख्यन्ते सगुणं लक्षणाष्टकम् ॥
तद्यथा,—
पूर्व्वं चत्वारः शुभदाः परे निन्द्यास्तदात्यया ।
विचार्य्य खड्गमानञ्च कर्णेयं खड्गकोविदैः ॥
घोरस्तार इति ख्यातो द्विविधः खड्गकोविदैः ।
घोरः स्यात् सुखसम्पत्त्यै तार उच्चाटने मतः ॥
यत्र हंसरवस्येव खड्गे नखहते ध्वनिः ।
हंसध्वनिरयं खड्गः सकलार्थप्रसाधनः ॥१॥
कांस्यशब्द इवाभाति यस्मिन् खड्गे हते ध्वनिः ।
कांस्यध्वनिरयं खड्गः प्राह नागार्ज्जुनो
मुनिः ॥२॥
अभ्रस्य लक्षणं पतितम् ॥३॥
ढक्काशब्द इवाभाति यस्मिन् खड्गे हते ध्वनिः ।
ढक्काध्वनिरयं खड्गः सर्व्वशत्रुनिसूदनः ॥४॥
काकस्वर इवाभाति यस्मिन् खड्गे हते ध्वनिः ।
काकस्वरोऽयं खड्गः स्यात् श्रीयशःकुल-
नाशनः ॥५॥
तन्त्रीस्वरसमो यस्मिन् भवेत् खड्गे हते ध्वनिः ।
तन्त्रीध्वनिरयं खड्गः कुलश्रीधननाशनः ॥६॥
खरस्येव ध्वनिर्यस्मिन् खरध्वनिरयं मतः ।
श्रीयशोमानविज्ञानजयतेजोविनाशनः ॥७॥
प्रस्तरस्येव यः खड्गः स निन्द्यः खड्ग-
लक्षणे ॥८॥
गभीरतारध्वनिना खड्गस्याशुभलक्षणम् ।
उत्तानमन्द्रध्वनिना खड्गस्याशुभलक्षणम् ॥
अपाङ्गनेत्रहीनोऽपि खड्गः सुध्वनिसत्तमः ।
अन्धः कुरूपो मनुजो यथा भुवि सुगायनः ॥
सर्व्वलक्षणसम्पन्नः खड्गो यो ध्वनिवर्ज्जितः ।
स निन्द्यः सुन्दराङ्गोऽपि यथा वाक्यविवर्ज्जितः ॥
नखेन वाथ दण्डेन तथा लौहशलाकया ।
कोष्टेन शर्कराभिर्व्वा ध्वनिविज्ञानमुच्यते ॥”
इति खड्गपरीक्षायां ध्वन्यध्यायोऽष्टमः ॥८॥
अथ द्विविधं मानम् ।
यन्मानं द्विविधं प्रोक्तं तस्य लक्षणमुच्यते ।
उत्तमाधमभेदेन भेदो हि द्विविधो मतः ॥
उत्तमं यद्विशालं स्यात्तनुमानं प्रकीर्त्तितम् ॥१॥
अधमं तच्च यत् खर्व्वं गुरुमानं प्रकीर्त्तितम् ॥२॥
तत्पुनस्त्रिविधं प्रोक्तमादिमध्यान्तभेदतः ।
यो मुष्टिविंशतिसमायततीव्रधारो
भर्त्तुर्भवेत् प्रसरतोऽपि षडङ्गुलीभिः ।
मानेन चाष्टपलिकः स हि खड्गमध्ये
नातिप्रकृष्टनविकृष्टफलप्रदः स्यात् ॥
यो द्वादशाष्टनवमुष्टिभिरायतः स्यात्
मन्दो भवेत् प्रसरतोऽपि चतुर्थभागः ।
तावत्पलैः परिमितस्तु ततोऽधिको वा
खड्गाधमो धनयशःकुलनाशनाय ॥
नागार्ज्जुनोऽपि ।
यावत्यो मुष्टयो दैर्घ्ये तदर्द्धाङ्गुलयो यदा ।
प्रसरे तच्चतुर्थांशमिति वै मानमुत्तमम् ॥
यावत्यो मुष्टयो दैर्घ्ये प्रसरे तत्त्रिभागिकः ।
पलैस्तदर्द्धस्तुलितः स खड्गो मध्य उच्यते ॥
यावत्यो मुष्टयो दैर्घ्ये तुर्य्यांशः प्रसरे तु तत् ।
अधमः कीर्त्तितः खड्गस्तत्समो वाधिकः
पलैः ॥
भौमानामिदमुद्दिष्टं दिव्यास्तु लघवो मताः ॥”
इति खड्गपरीक्षायां मानाध्यायः ॥९॥
भोजस्तु ।
“दीर्घता लघुता चैव स्वरविस्तीर्णता तथा ।
दुर्भेद्यता सुघटता खड्गानां गुणसंग्रहः ॥
खर्व्वता गुरुता चैव मन्दता तनुता तथा ।
सुभेद्यता दुर्घटता खड्गानां दोषसंग्रहः ॥
इति निखिलमुदारमुक्तमत्र
बहुतन्त्रेषु निरूप्य खड्गयष्टेः ।
नृपतिरिति विचिन्त्य यो विधत्ते
स चिरतरां श्रियमञ्चितां लभेत ॥”
इति युक्तिकल्पतरूक्तखड्गपरीक्षा समाप्ता ॥
तरसं, क्ली, (तॄ + बाहुलकात् असच् ।) मांसम् ।
इत्यमरः । २ । ६ । ६३ ॥ (यथा, कात्यायन-
श्रौतसूत्रे ।
“तरसमयाः पूर्व्वोक्तभागाः ॥”
“तरसमया मांसमयाः ।” इति कर्कः ॥)
तरस्थानं, क्ली, (तराय अवतरणाय यत् स्थानम् ।
तरस्य स्थानं वा ।) घट्टः । इति जटाधरः ॥
तरस्वान्, [त्] त्रि, (तरो बलं वेगो वा अस्त्य-
स्येति मतुप् । मस्य वः ।) शूरः । वेगी ।
इति व्याकरणम् ॥ (चतुर्थमनुपुत्रविशेषः ।
यथा, हरिवंशे । ७ । ८८ ।
“तरङ्गभीरुर्धृष्टश्च तरस्वानुग्र एव च ।
अभिमानी प्रवीरश्च जिष्णुः सङ्क्रन्दनस्तथा ॥”)
तरस्वी, [न्] त्रि, (तरो वेगः बलं वास्त्यस्य ।
तरस् + “अस्मायामेधास्रजो विनिः ।” ५ । २ ।
१२१ । इति विनिः ।) शूरः । वेगी । इत्यमरः ।
३ । ३ । १२७ । (यथा, भागवते । ८ । १० । ३१ ।
“दाङ्क्षा च तथा सोमः पुलोम्ना युयुधेऽनिलः ।

निशुम्भशुम्भयोर्देवी भद्रकाली तरङ्गिणी ॥”)
तरङ्गे वायौ च पुं । इति राजनिर्घण्टः ॥

तरान्धुः, पुं, ( तराय तरणाय तरे तरङ्गे वा अन्धुरिव अतिगभीरमध्यदेशत्वात् तथात्वम् । ) नौकाविशेषः । भड़ इति भाषा । तत्पर्य्यायः । कोड़ः १ वहनम् २ वार्य्यटः ३ वहित्रम् ४ । इति त्रिकाण्डशेषः ॥

तराशुः, पुं, (तराय तरणार्थं अलति पर्य्याप्नोतीति । अल + उण् ।) नौकाविशेषः । इति हारावली ॥

तरिः, स्त्री, (तरत्यनया इति । तॄ + “अच इः ।” उणां । ४ । १३८ । इति इः । ) नौका । इत्यमरः । १।१०।१० ॥ ( यथा, महाभारते । १ । १०० । ४८ ।

“धात्मीहात्मकन्यास्मि धर्म्मार्थं वाहये तरिम् ॥”)
दशा । वस्त्रादिपेटकः । इति हेमचन्द्रः ॥

तरिकः, पुं, (तराय तरणाय हितः । तॄ + ठन् । ) प्लवः । इति त्रिकाण्डशेषः ॥ ( तरणं तरणनिमित्तकदेयशुल्कं अधिकारोऽस्यास्य । तरणशुल्कग्रहणाधिकारी । यथा, याज्ञवल्क्ये । २ । २६६ । [दद्यात् ॥”)
“तरिकः स्थलजं शुल्कं गृह्णन् दाप्यः पणान्

तरिका, स्त्री, ( तरिक + टाप् । ) नौका । इति शब्दरत्नावली ॥

तरिणी, स्त्री, ( तरत्यनया तरणमस्त्यस्याः इति इनिः ङीप् च ।) नौका । इति हेमचन्द्रः ॥

तरिता, स्त्री, ( तर + इतच् । ) तर्ज्जनी । इति शब्दचन्द्रिका ॥ शुक्लनम् । गाँजा इति भाषा । यथा, कुलार्णवतन्त्रे ।

“सम्बिदा कालकूटञ्च ताम्रकूटञ्च धुस्तुरम् ।
अहिफेनं खर्ज्जुरसस्तारिका तरिता तथा ॥”

तरिरथः, पुं, ( तरेर्नौकाया रथ इव तत्परिचालनात्तथात्वम् । ) अरित्रम् । इति हारावली ॥

तरीः, स्त्री, ( तरत्यनया इति । तॄ + “अवितॄस्तृतन्त्रिभ्य ईः ।” उणां । ३ । १५८ । इति ईः । ) नौका । ( यथा, माघे । ३ । ७६ ।

“तरीषु तत्रत्यमफल्गुभाण्डम् ॥”)
गदा । वस्त्रादिपेटकः । इत्युणादिकोषः ॥ धूमः । इति त्रिकाण्डशेषः ॥ द्रोणी । इति जटाधरः ॥ दशा । इति मेदिनी । रे, ४० ॥

तरीषः, पुं, ( तॄ + “तॄभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च ।” उणां ।४। २६ । इति ईषन् । ) शोभनाकारः । भेलः । व्यवसायः । इत्युणादिकोषः ॥ समुद्रः । समर्थः । इति संक्षिप्तसारे उणादिवृत्तिः ॥ स्वर्गः । इति मेदिनी । षे, १७ ॥

तरीषी, स्त्री, ( तरीष + संज्ञायां ङीष् । ) इन्द्रकन्या । इति मेदिनी । षे, १८ ॥

तरुः, पुं, ( तरति समुद्रादिकमनेनेति । तॄ + “भृमृशीतॄचरित्सरितनिधनिमिमस्जिभ्य उः ।” उणां । १ । ७ । इति उः । ) वृक्षः । इत्यमरः । २ । ४ । ५ ॥ (यथा, रघुः । ३ । ७० ।

“मुनिवनतरुच्छायां देव्या तया सह शिश्रिये ॥”)

तरुकूष्मिः, पुं, ( तरौ वृक्षे कूष्मयतीति । कूष्म + इन् । ) वागगुदपक्षी । इति त्रिकाण्डशेषः ॥

तरुजीवनं, क्ली, ( तरोर्जीवनं जीवनकारणम् । ) वृक्षमूलम् । इति शब्दचन्द्रिका ॥

तरुणं, क्ली, (तॄ + “त्रो रश्च लो वा ।” उणां ।३। ५४ । इति उनन् ।) कुब्जपुष्पम् । इति मेदिनी । णे, ४८ ॥

तरुणः, पुं, ( तॄ + उनन् ।) स्थूलजीरकः । एरण्डः । इति राजनिर्घण्टः ॥

तरुणः, त्रि, ( तरति प्लवते प्रमोदसलिले इति । तॄ + “त्रो रश्च लो वा ।” उणां । ३ । ५४ । इति उनन् । ) युवा । इति मेदिनी । णे, ४८ ।
(यथा, महाभारते । १ । ४० । २६ ।
“तरुणस्तस्य पुत्त्रोऽभूत्तिग्मतेजा महातपाः ॥”)
नूतनः । इति धरणिः ॥ (यथा, छन्दोमञ्जर्य्याम् ।
“तरुणं सर्षपशाकं नवौदनं पिच्छिलानि
दधीनि ।
स्वल्पव्ययेन सुन्दरि ! ग्राम्यजनो मिष्टमश्नाति ॥”)

तरुणज्वरः, पुं, ( तरुणश्चासौ ज्वरश्चेति । ) सप्ताहावधिज्वरः । (यथा, चक्रदत्तः ।
“आसप्तरात्रं तरुणं ज्वरमाहुर्मनीषिणः ॥”

तरुणदधि, क्ली, (तरुणं तरुणत्वयोक्तं दधीति ।) पञ्चदिनातीतदधि । इति वैद्यकम् ॥
“शुष्कं मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि ।
प्रभाते मैथुनं निद्रा सद्यःप्राणहराणि षट् ॥”
इति चाणक्ये । ६४ ॥

तरुणी, स्त्री, ( तरुण + गौरादित्वात् ङीष् । ) द्वितीयवयाः स्त्री । (यथा,—
“ततस्तु तरुणी ज्ञेया द्वात्रिंशद्वत्सरावधि ।
निदाघशरदोर्बाला हिता विषयिणी मता ॥
तरुणी शीतसमये ॥”
‘नित्यबाला सेव्यमाना नित्यं वर्द्धयते बलम् ।
तरुणी ह्रासयेच्छक्तिम् ॥”
“वृद्धोऽपि तरुणीं गत्वा तरुणत्वमवाप्नुयात् ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
भूयोभूयः प्रवर्त्तमानरजाः स्त्री । इत्यमरटीकासारसुन्दरी ॥ तत्पर्य्यायः । युवती २ । इत्यमरः । २ । ६ । ८ ॥ तलुनी ३ युवतिः ४ । इति भरतः ॥ यूनी ५ टिक्करी ६ धनिका ७ धनीका ८ । इति शब्दरत्नावली ॥ घृतकुमारी । दन्तीवृक्षः । चीडानामगन्धद्रव्यम् । पुष्पविशेषः । सेउती इति भाषा ॥ तत्पर्य्यायः । सहा २ कुमारी ३ गन्धाढ्या ४ चारुकेशरा ५ भृङ्गेष्टा ६ रामतरुणी ७ सुदला ८ बहुपत्रिका ९ भृङ्गवल्लभा १० । इति राजनिर्घण्टः ॥ सेवती ११ । यथा, नारसिंहपुराणे ।
“चम्पकात् पुष्पशतकादशोकं पुष्पमुत्तमम् ।
अशोकात् पुष्पसाहस्रात् सेवतीपुष्पमुत्तमम् ।
सेवतीपुष्पसाहस्रात् कुब्जकं पुष्पमुत्तमम् ॥”
(यथा, भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥
“शतपत्री तरुण्युक्ता कर्णिका चारुकेशरा ।
महाकुमारी गन्धाढ्या लाक्षापुष्पातिमञ्जुला ॥”

अस्या गुणाः । शिशिरत्वम् । ‘स्निग्धत्वम् । पित्तदाहज्वरमुखपाकतृष्णाविच्छर्द्दिनाशित्वम् । मधुरत्वञ्च । इति राजनिर्घण्टः ॥

तरुणीकटाक्षमालः, पुं, ( तरुणीनां कटाक्षाणां माला यत्र ।) तिलकवृक्षः । इति राजनिर्घण्टः ॥

तरुतूलिका, स्त्री, (तरुस्थिता तूलिका चित्रवर्त्तिका इव । यद्वा, तरौ वृक्षे दोलयतीति । दुल क्षेपे + ण्वुल् । टापि अत इत्वम् । पृषोदरादित्वात् साधुः । ) वातुलिः । इति हारावली ॥ वादुड़ इति भाषा ॥ तरुदूलिकापि पाठः ॥

तरुनखः, पुं, (तरौ तरोर्वा नख इव ।) कण्टकः । इति हारावली ॥

तरुभुक्, [ ज् ] पुं, ( तरुं भुनक्तीव । भुज + क्विप् । ) वन्दाकः । इति राजनिर्घण्टः ॥

तरुमृगः, पुं, ( तरौ तिष्ठन् मृग इव । शाकपार्थिववत् मध्यपदलोपी समासः । यद्वा, तरुप्रियो मृगः पशुः । ) वानरः । इति शब्दरत्नावली ॥

तरुरागं, क्ली, ( तरौ रागो रक्तिमाभा यस्मात् ।) किशलयम् । नूतनपल्लवः । इति हारावली ॥

तरुराजः, पुं, (तरूणां राजा अत्युच्चत्वात्तथात्वम् । समासे टच् । ) तालवृक्षः । इति राजनिर्घण्टः ॥ ( सर्व्वपूज्यत्वात् स्वर्लोकभोग्यत्वाच्च पारिजातपुष्पवृक्षः । यथा, हरिवंशे ।१२४।५५।
“यदेतदाहृतं स्वर्गात् तत् त्वदर्थं मया विभो ! ।
देवोपभोग्यमेतद्धि तरुराजसमुद्भवम् ॥”)

तरुरुहा, स्त्री, ( तरौ रोहतीति । रुह + कः । टाप् । ) वन्दाकः । इति राजनिर्घण्टः ॥

तरुरोहिणी, स्त्री, ( तरुषु रोहतीति । रुह + णिनिः + ङीप् ।) वन्दाकः । इति राजनिर्घण्टः ॥

तरुवल्ली, स्त्री, ( तरुषु वल्लीव तरुर्वल्लीव वा । ) जतुकालता । इति राजनिर्घण्टः ॥

तरुशायी, [ न् ] पुं, ( तरौ तरुकोटरे शाखायां वा शेते इति । शी + णिनिः । ) पक्षी । इति हारावली ॥

तरुसारः, पुं, ( तरोः सारः । ) कर्पूरः । इति हारावली ॥ ( यथा, सुश्रुते चिकित्सितस्थाने २५ अध्याये । “सवर्णेनापि सुवर्णरजतताम्रायोरीतिदन्तशृङ्गमणितरुसारमयानि शलाकानीति ।”कर्पूरशब्देऽस्य विवृतिर्ज्ञातव्या ॥)

तरुस्था, स्त्री, ( तरौ तिष्ठतीति । स्था + कः टाप् च । ) वन्दाकः । इति राजनिर्घण्टः ॥

तरूटः, पुं, ( तरोः जट इव । ) उत्पलकन्दः । अस्य गुणाः । गुरुत्वम् । विष्टम्भित्वम् । शीतलत्वञ्च । इति राजवल्लभः ॥ (यथा, चरके सूत्रस्थाने सप्तविंशेऽध्याये ।
“तरूटविसशालूककौञ्चादनकशेरुकम् ।
शृङ्गाटकं कलोड्यञ्च गुरुविष्टम्भि शीतलम् ॥”)

तर्क, क दीप्तौ । इति कविकल्पद्रुमः ॥ ( चुरां-परं-अकं-सेट् ।) क, तर्कयति । वितर्कोऽध्ययम् । ( अथ सकं ।) तर्कयत्यमुमर्थं सुधीः । इति दुर्गादासः ॥

तर्कः, पुं, (तर्क+भावे घञ्।) आकाङ्क्षा। वितर्कः। व्यभिचारशङ्कानिवर्त्तकः। इति भाषापरिच्छेदः॥ (यथा, महाभारते। ३। १९९। १०८।
"शुष्कतर्कं परित्यज्य आश्रयस्व श्रुतिं स्मृतिम्॥")
स च पञ्चविधः। यथा। आत्माश्रयः १ अन्योन्याश्रयः २ चक्रकः ३ अनवस्था ४ प्रमाणबाधितार्थकः ५। इति जगदीशः॥ एषां लक्षणानि तत्तच्छब्दे द्रष्टव्यानि॥ ऊहः। हेतुशास्त्रम्। तत्तु मीमांसादि। इति मेदिनी। के, २५। (यथा, मनुः। १२। १०६।
"आर्षं धर्म्मोपदेशञ्च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्म्मं वेद नेतरः॥"
न्यायशास्त्रम्। यथा, नैषधे।
"यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः॥"
ज्ञानम्। यथा, महाभारते। १। १६८। १८।
"तं वै फलार्थिनं मन्ये भ्रातरं तर्कचक्षुषा॥"
अर्थवाद इति कर्कोपाध्यायः। यथा, अक्ताः शर्करा उपदधातीति विधिः श्रूयते। तत्राञ्जनसाधनं घृतं तैलं वा तन्मध्ये केनाक्ता इति संशये तेजो वै घृतमित्यर्थवादात् घृतेनाक्ता इति निर्णीयते। अतस्तर्कोऽर्थवादः॥")

तर्ककः, पुं, (तर्केण आकाङ्क्षया कायति प्रकाशते इति। कै+कः।) याचकः। इति हेमचन्द्रः॥ (यथा, महाभारते। १२। ४५। ६।
"तथानुजीविनो भृत्यान् संश्रितानतिथीनपि।
कामैः सन्तर्पयामास कृपणांस्तर्ककानपि॥"
तर्कयतीति। तर्क+ण्वुल्।) तर्ककारकश्च॥

तर्कविद्या, स्त्री, (तर्कोपदेष्ट्री विद्या तर्करूपा या विद्या वा।) न्यायविद्या। तत्पर्य्यायः। आन्वीक्षिकी २। इत्यमरः। १।६।५॥ (यथा, महाभारते। १३। ३७। १२।
"आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम्॥)

तर्कारी, स्त्री, (तर्कं ऋच्छतीति। ऋ+कर्म्मण्यण्।" ३। २। १। इत्यण्। ङीप् च।) जयन्तीवृक्षः। इत्यमरः। ४। २। ६५॥ (पर्य्यायोऽस्या यथा, वैद्यकरत्नमालायाम्।
"वैजयन्ती च तर्कारी जयन्ती विजया जया॥"
अस्या गुणा यथा,—
"तर्कारी वरणं स्वादु सतिक्तं कफवातजित्॥"
इति वाभटे सूत्रस्थाने षष्ठेऽध्याये॥
अस्याः व्यवहारो यथा,—
"तर्कारी विश्वभिग्गुरसवत्सकाग्निमन्थैः।
पञ्चमूलपलैस्तोयं प्रतसृणाञ्च संपचनम्॥"
इति चरके चिकित्सास्थाने सप्तविंशेऽध्याये॥
इयं गणिकारिकापि वाच्या। तत्पर्य्याया यथा,
"अग्निमन्थो जयः स स्याच्छ्रीपर्णी गणिकारिका।
जया जयन्ती तर्कारी नादेयी वैजयन्तिका॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे॥)

तर्किकः, पुं, चक्रमर्द्दवृक्षः। इतिरत्नमाला॥ तर्किलोऽपि पाठः॥ (चक्रमर्द्दशब्देऽस्य विवृतिर्ज्ञातव्या॥)

तर्की, [न्] त्रि, (तर्कयितुं शीलमस्य यद्वा तर्कयतीति। तर्क+णिनिः।) तर्कविशिष्टः। मीमांसकः। यथा,—
"त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्म्मपाठकः।
त्रयश्चाश्रमिणः पूर्ब्बे परिषत् स्याद्दशावरा॥"
इति मनुः। १२। १११॥

तर्कुः, स्त्री, (कृत्+उः। निपातनात् साधुः।) सूत्रनिर्म्माणयन्त्रम्। टेको इति भाषा॥ तत्पर्य्यायः। कपालनालिका २। इति त्रिकाण्डशेषः॥ तर्कुटी ३ सूचना ४। इति हारावली॥ (कुम्भकारस्य चक्राकारशिलाभाण्डम्। यथा, अनर्घराघवे। २। ६।
"शङ्के सम्प्रति यावदभ्युदयते तत्तर्कुटङ्कानृजू-
रज्यद्विश्वरजश्छटावलयितो दर्वीक्षरामीश्वरः॥")

तर्कुटं, स्त्री, (तर्कयति सूत्रोत्पादकतया शोभते इति। तर्क दीप्तौ+बाहुलकात् उटन्।) कर्त्तनम्। इति त्रिकाण्डशेषः॥ काटनाकाटा इति भाषा॥

तर्कुटी, स्त्री, (तर्कुट+स्त्रियां गौरादित्वात् ङीष्।) तर्कुः। इति हारावली। २१३।

तर्कुपिण्डः, पुं, (तर्कुस्थितः पिण्डः। मध्यपदलोपिसमासः।) तर्कुस्थमृत्पिण्डः। टेकोर बाँटुल इति भाषा॥ तत्पर्य्यायः। वर्त्तिनी २। इति जटाधरः॥ तर्कुपीठी ३ वर्त्तुला ४। इति हारावली। २१३॥

तर्कुपीठी, स्त्री, (तर्कुस्थिता पीठी स्वल्पो मृत्पिण्डः।) तर्कुपिण्डः। इति हारावली। २१३॥

तर्कुलासकः, पुं, (लासयति शोभयतीति। लस कान्तौ+णिच्+ण्वुल्। तर्कुः सूत्रनिर्म्माणयन्त्रं तस्या लासकः।) भञ्जोलः। इति हारावली। २१३॥ खरसा इति भाषा॥

तर्कुशाणः, पुं, (तर्कोः शाणः।) शाणकः। इति त्रिकाण्डशेषः॥ टेकोर शाण इति भाषा॥

तर्क्षुः, पुं, (तरक्षुः पृषोदरादित्वात् साधुः।) तरक्षुः। इति शब्दरत्नावली॥

तर्ष्यः, पुं, यवक्षारः। इति रत्नमाला॥

तर्ज्ज, भर्त्सने। इति कविकल्पद्रुमः॥ (भ्वां-परं-सकं-सेट्।) तर्ज्जति। इति दुर्गादासः॥

तर्ज्ज, क ङ भर्त्से। इति कविकल्पद्रुमः॥ (चुरां-आत्मं-सकं-सेट्।) क ङ, तर्ज्जयते। भर्त्सस्तर्ज्जनम्। तामतर्ज्जयदम्बरे। इति रघुप्रयोगस्तु तर्ज्जनं तर्ज्जः। तर्ज्जं करोतीति णौ साध्यः। इति दुर्गादासः॥

तर्ज्जनं, क्ली, (तर्ज्ज+भावे ल्युट्।) भर्त्सनम्। यथा। अधीरायास्तर्ज्जनताडनादि। इति रसमञ्जरी॥ (यथाच कुमारे। ६। ४५।
"भ्रूभेदिभिः सकम्पोष्ठैर्ललिताङ्गुलितर्ज्जनैः।
यत्र कोपैः कृताः स्त्रीणामाप्रसादार्थिनः प्रियाः॥")

तर्ज्जनी, स्त्री, (तर्ज्ज्यतेऽनयेति। तर्ज्ज भर्त्सने+करणे ल्युट्। ततः स्त्रियां ङीप्।) अङ्गुष्ठसमीपाङ्गुलिः। तत्पर्य्यायः। प्रदेशिनी २।

इत्यमरः। २। ६। ८१॥ सा तु गर्भस्थस्य चतुर्भिर्म्मासैर्भवति। इति सुखबोधः॥ (यथा, कथासरित्सागरे। १७। ८८।
"तच्छ्रुत्वा श्वशुरं तं सा वधूः सोमप्रभा क्रुधा।
विलोक्य भ्रामयामास यमाज्ञामिव तर्ज्जनीम्॥")

तर्ज्जिकः, पुं, (तर्ज्जस्तर्ज्जनमस्त्यत्र। तर्ज्ज+ठन्।) देशविशेषः। तत्पर्य्यायः। ताजिकः २। इति हेमचन्द्रः। ४। २४॥

तर्णः, पुं, (तर्णोति तृणादिकं भक्षयतीति। तृण भक्षणे+अच्।) वत्सः। इति हेमचन्द्रः। ४। ३२६॥

तर्णकः, पुं, (तर्ण एव। स्वार्थे कन्।) सद्योजातवत्सः। इत्यमरः। २। ९। ६१॥ कोमल बाछुर इति भाषा॥ (यथा, राजतरङ्गिण्याम्। ५। ४२६।
"जानन्तीरा वरा पत्नी वहद्धारा निपात्यते।
आलिङ्गमाना क्रन्दन्ती तर्णकैरिव दारकैः॥"
बालकः। यथा, अनर्घराघवे। २। ५३।
"मुनिविनियोगलूनप्ररूढमन्दुशाङ्कुलानि
बर्हींषि।
गोकर्णतर्णकोऽयं तर्णोत्सुपकण्ठकण्डूषु॥")

तर्णिः, पुं, (तरणिः पृषोदरादित्वादल्लोपः।) सूर्य्यः। प्लवः। इति शब्दार्थकल्पतरुः॥

तर्णरीकं, क्ली, (तीर्य्यतेऽनेनेति। तृ+"पर्फरीकादयश्च।" उणां। ४। २०। इति ईकप्रत्ययेन निपातनात् साधुः।) नौका। (तरतीति। कर्त्तरि ईकः।) पारगे, त्रि। इति मेदिनी। के,१९१॥

तर्द, हिंसे। इति कविकल्पद्रुमः॥ (भ्वां-परं-सकं-सेट्।) तर्दति। इति दुर्गादासः॥

तर्दूः, स्त्री, (तरति प्लवते इति। तॄ+"चो दुक् च।" उणां। १। ९१। इति ऊः दुगागमश्च।) दारुहस्तकः। इत्यमरः। २। ९। ३४॥ काठेर हाता इति भाषा॥

तर्पणं, क्ली, (तृप प्रीणने+भावे ल्युट्।) तृप्तिः। प्रीणनम्। इत्यमरः। २। ९। ५६॥ (यथा, कथासरित्सागरे। २६। २३६।
"तथाकृत्य नरोर्मूर्ते वेतालं शुक्रकलेवरे।
पूजयित्वाकरोत्तस्य शुभासवलितर्पणम्॥")
यज्ञकाष्ठम्। इति हेमचन्द्रः॥ (तृप्यन्ति पितरो येन। तृप्+करणे ल्युट्।) देवर्षिपितृमनुष्याणां जलाञ्जलिदानेन तृप्तिसम्पादनम्। यथा,
"एवं स्नात्वा पितॄन् देवान् मनुष्यांस्तर्पयेन्नरः।
नाभिमात्रे जले स्थित्वा चिन्तयेदूर्द्ध्वमानसः॥
आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिम्।
त्रींस्त्रीनञ्जलीन् दद्यादाकाशे दक्षिणे तथा॥
वसित्वा वसनं शुष्कं स्थले चास्तीर्णबर्हिषि।
विधिज्ञस्तर्पणं कुर्य्यान्न पात्रे तु कदाचन॥
यदपां क्रूरमांसन्तु यदमेध्यन्तु किञ्चन।
अशान्तं मलिनं यच्च तत् सर्व्वमपगच्छतु॥
गृहीत्वानेन मन्त्रेण तोयं सव्येन पाणिना।
प्रक्षिपेद्दिशि नैरृत्यां दुःस्वोपहतयेऽद्भुतम्॥
अनाश्चिकन्तु यद्दुःखं पापादृयञ्च प्रतिग्रहम्।

